चतस्रो गतयो दृश्या अदृश्या[1] पञ्चमी गतिः ॥ १५ ॥
मन्त्रध्यानादिना तस्य चीयते[2] पञ्चमी गतिः ॥ १६ ॥
धूमचिटिचिटिश्चैव[3] मण्डूकप्लुतिरेव च ।
चकम्पश्च विकम्पश्च[4] पञ्चावस्था रसस्य तु ॥ १७ ॥
मध्यमानस्य[5] काल्केन सत्त्ववेधि गतित्रयम्[6] ।
जले गतिर्मलगतिः पुनर्हंसगतिस्ततः[7] ॥ १८ ॥
हेम[8] दत्त्वा ततः शुद्धं तस्तु स्तम्भेन्नियामकैः[9] ।
नियामकगणौषध्या[10] रसं दत्त्वा विपाचयेत् ॥ १९ ॥
नियमितो[11] न प्रयाति तथा धूमगतिं[12] शिवे ॥ २० ॥
कणिकाचालरहितो बुद्बुदैश्चापवर्जितः[13] ।
नियमितो भवत्येष[14] चूल्लिकाग्निसहस्तथा[15] ॥ २१ ॥

---

(1) M reads न दृश्या. Cf. रस.स., which exactly agrees with the above. (2) रस.स. reads कथ्यते. [Vide Chap. I. v. 85.] (3) K reads धूमचिरीचिटिश्चैव. M reads धूम्र instead of धूम. (4) K has सपक्षश्च विपक्षश्च. (5) M reads मद्यमानेन, which appears to be inc. (6) K reads erroneously सभवेद्धौ गतियश्च. M reads सत्त्ववेद्ये गतित्रयम्, which is not perfectly correct. (7) M has जलेन विमलगतिस्तथा हंसगतिः पुनः. (8) K reads हंसं. (9) K has ततस्तम्भो नियामयेत्. M has स्तम्भस्तम्भो नियामकैः. (10) नियामकगणौ, विध्यौ, a variant in M. (11) K reads नियमानीतो, which destroys the metre. All the texts read नियमितो, which is gram. inc. (12) K reads धूम्रगतिः. (13) K has बुद्बुदस्पापवर्जितः. M has बुद्बुदश्चापवन्दितः, which is inc. (14) M reads भवत्येव. (15) चूल्लिकाग्निसहस्तथा, a variant in K.

अनियम्य यदा[1] सूतं जारयेत् काञ्जिकाशये[2] ।
जायते निष्फलं भद्रे तदा[3] तस्य गतित्रयम् ॥ २२ ॥
दोलास्वेदेन चावश्यं[4] स्वदितो हि दिनत्रयम्[5] ।
वसुभण्डादिभि[6]र्देवि रसराजो न[7] क्षीयते ॥ २३ ॥
अजीर्णं तु रसं दृष्ट्वा दद्या[8]द्गोमादिकं तत: ।
स्वेदनं च[9] तत: कार्य्यं दीयमानस्य मर्दनम् ॥ २४ ॥
रसालिङ्गित आहार:[10] पिष्टिरित्यभिधीयते ।
तद्द्रुतं रसगर्भे तु जारणं परिकीर्त्तितम् ॥ २५ ॥
जारणा तत्समाख्याता तदेवत्रोपलभ्यते[11] ।
जीर्णान्ते रञ्जनं कार्य्यं रक्तवर्ग[12]गणेन च ॥ २६ ॥
जीर्णं जार्णन्तु[13] संरक्तं[14] समहेम्ना तु सारयेत् ।
सारणायन्त्रयोगेन बध्यते सारितो[15] रस: ॥ २७ ॥

---

(1) M reads यथा, which seems to be incorrect. (2) जालयेत् काञ्जिकाशय, a variant in K. (3) M reads यथा, which is not correct. (4) K reads दालास्वेदनतोऽवश्य. M reads डाला in place of दोला. (5) The portion commencing from दिनत्रयम् and ending in रसराजो न क्षी is wanting in K. (6) M reads वसुभड़ादिभि. (7) M has रसराजेन, which is not accurate. (8) K reads देया, which is gram. inc. (9) K reads तु. (10) रस लिङ्गीतकाहार, an incorrect variant in K. (11) K has नाख्य मोपलभ्यते. (12) K reads रक्तवर्ण. (13) M reads जीर्णाजीर्ण तु. (14) M reads सरक्त (without अनुस्वार). (15) M has सारता, which seems to be the error of the scribe.

सारित: सारितश्चैव[1] यथा भवति सूतक: ।
क्रामणेन समायुक्तं तच्च[2] वेधे नियोजयेत् ॥ २८ ॥
चारोट:[3] पारदो ब्रह्मा मूर्च्छितस्तु जनार्द्दन: ।
बद्धस्तु रुद्ररूप: स्यात्[4] कर्म्मयोगबलाद्रस: ॥ २९ ॥
शृणु देवि प्रवक्ष्यामि कर्म्मयोगस्य विस्तरम् ॥ ३० ॥
पारदस्य त्रयो दोषा विषं वह्निर्मलस्तथा[5] ।
विषेण सविषं विद्यात्[6] वह्नौ कुष्ठी भवेन्नर: ।
मलेनोदररोगी स्यात् म्रियते च रसायने ॥ ३१ ॥
षट्त्रुट्यश्चैकलिक्षा स्यात्[7] षट्लिक्षा यूक एव च[8] ।
षट्यूकास्तु रज:संज्ञा:[9] कथितास्तव सुव्रते ॥ ३२ ॥

---

(1) चारीतं चरितश्चैव, an incorrect variant in K. सारितचरितश्चैव, a variant in M, wherein the middle term is incorrect. (2) K and M read तच्च, which is gram. incorrect. (3) M reads चघाट:. [रस.स. defines चाराट thus :—"सुग्रोथितो रस: सम्यगारोट इति कथ्यते." Chap. XI. v. 60. Cf. "मलहीनो यदा सूत: पितामहसमो भवेत्। स बद्धो विष्णुराख्यातो रञ्जित: शिव उच्यते ॥" रससार, 1st Paṭala, v. 5.] (4) K has an incorrect reading—वपूर्ण स्यात्. (5) M reads विषवह्निजलस्तथा, wherein the term जल is incorrect. [Vide रस.स. Chap. XI. v. 14.] (6) K reads द्द्यात्. M reads विन्द्यात्. [Vide रस.स. Chap. XI. v. 15.] (7) M reads सदा. [रस.स. agrees closely with the texts in vs. 32, 33 and 34. Vide Chap. X. vs. 102–105.] (8) K reads incompletely the whole hemistich thus :—ष···यश्चैव···क्षा स्यात् षड् लिक्षायुमेव च. M reads यूकमेव षट्. (9) चाकरस रज:संज्ञ, a variant in M, which seems to be inc.

षड्रजः सर्षपः साक्षात्[1] सिद्धार्थः स च कीर्त्तितः[2] ।
षड्सिद्धार्थाश्च द्वैर्वेश्च यवस्त्वेकः प्रकीर्त्तितः ॥ २३ ॥[3]
षड्यवैरेकगुञ्जा स्यात्[4] षड्गुञ्जाश्चैकमाषकः ।
माषा द्वादश तोलः स्यात्[5] षष्टी तोलाः पलं भवेत्[6] ॥२४॥
द्वात्रिंशत्पलकं देवि शुभमस्तु[7] परिकीर्त्तितम् ।
शुभस्य तु सहस्रे द्वे भार एकः प्रकीर्त्तितः ॥ २५ ॥
द्वे सहस्रे पलानान्तु सहस्रं शतमेव वा ।
अष्टाविंशत् पलानान्तु दश पञ्चकमेव वा ॥ २६ ॥[8]
पलार्द्धेनैव[9] संस्कारः कर्त्तव्यः सूतकस्य तु ॥ २७ ॥
महाबला-नागबला-मेघनादा-पुनर्णवम्[10] ।
मेषशृङ्गी[11] च तक्षारैः[12] नवसारसमन्वितम्[13] ।

---

(1) M reads षड्रकः, which is an error of the scribe. रस.स. reads स स्यात्. (2) K has सिद्धार्थः स च प्रकीर्त्तितः, wherein प्र is redundant. (3) This hemistich is wanting in K. रस.स. reads षट्सिद्धार्थैश्च. (4) रस.स. has तु instead of स्यात्. After this charana we find in रस.स. "त्रिगुञ्जा वल्ल उच्यते । षड्भिरेव तु गुञ्जाभिर्माष एकः प्रकीर्त्तितः ।" (5) माष-द्वादश तोला स्यात्, a variant in K. (6) K has तस्तुभिः पलं भवेत्, thus differing from other texts as well as from रस.स. [Vide Chap. X. v. 105.] (7) K reads शुभस्तु. M reads शुभस्तु. (8) This śloka nearly agrees with रस.स. [Vide Chap. XI. v. 21.] (9) M reads पलादूनं न. (10) K reads पुनर्णवा. (11) K reads मेषशृङ्गा. (12) K reads तक्षारे. (13) M reads पव सारसमन्वितम्, which appears to be incorrect.

पारदं देवदेवेशि स्वेदयेद्दिवसत्रयम् ॥ ३८ ॥

॥ इत्यौषधस्वेदनम् ॥[1]

गिरिकर्णी च मोनाक्षी सहदेवी पुनर्णवा ।
उरगा त्रिफला कान्ता[2] लघुपर्णी[3] शतावरी ॥ ३९ ॥
तुषवर्ज्जं तु धान्याम्ले[4] सर्व्वं संक्षुभ्य[5] निक्षिपेत् ।
एकादशगुणे[6]ऽम्लेऽस्मिन् षोड़शांशैर्विमर्द्दितम् ॥ ४० ॥
आसुरीलवणव्योष चित्रकार्द्रकमूलकैः[7] ।
दोलायां[8] स्वेदयेद्देवि त्रिदिनं मृदुनाग्निना ॥ ४१ ॥

॥ इति सन्धानाम्लस्वेदनम् ॥

अङ्कोलस्तु[9] विषं हन्ति वङ्कि[10]मारग्वधः प्रिये ।

---

(1) K has इत्यौषधिस्वेदन तु कथितं तव सुव्रते। After this we find in K the following verses, which we have rejected, as these seemed to us incongruous, incorrect and unconnected with the text :—

षड़तर्षपसार्द्धा सिद्धार्थ स च ।
स्वेदन मर्दनं मूर्च्छा स्थापनं पातनं त्रिधा ।
निरोधनं नियामं च दीपनं चानुवासनम् ।
चारणा जारणा चैव गर्भे बाह्या द्रुति तथा ।
रञ्जन चारणं चानुसारणा प्रतिसारणा ।
क्रामण···देहस कर्त्तव्य रससाधकैः । ४०

(2) K reads कान्ता. (3) K reads लघुपर्णा. (4) तुषवर्ज्यांसुधान्याम्लैः, a variant in K. (5) K reads सयः. M reads सुक्षोभ्य. (6) एकांशषोड़षं, an incorrect variant in K. (7) Vide रस.स. Chap. XI. v. 23. (8) M reads डालायां. (9) M reads अङ्कोलैस्तु, which is gram. inc. (10) K reads वङ्की, which is inc.

चित्रकास्तु[1] मलं हन्यात् कुमारी सप्तकञ्चुकम् ॥ ४२ ॥[2]
तन्मात्रैरेभिः समोपेतै[3]र्मर्दयेत् पातयेद्बुधः[4] ॥ ४३ ॥
विद्याधरेण यन्त्रेण भावयेद्दोषवर्जितम्[5] ।
ततस्त्रिगुणवस्त्रस्थं[6] तं रसं देवि गालितम्[7] ॥ ४४ ॥
त्रिफलांबह्निमूलत्वात्[8] गृहकन्या[9]रसान्वितम् ।
निम्बद्रारे[10] तु पाषाणे मर्दयेत् पातयेत् पुनः ॥ ४५ ॥
धूमसारगुडू[11]व्योष-रजनीसित[12]सर्षपैः ।
इष्टिकाकाञ्चिकोर्णाभिः[13] त्रिदिनं मर्दयेत्ततः[14] ॥ ४६ ॥
निर्मलो जायते सूतः[15] मत्प्रभावं प्रकाशयेत्[16] ॥ ४७ ॥
वासकेन[17] विभीतेन मर्दयेत् पातयेत् पुनः ।
नागवङ्गादिका दोषा यान्ति नाशमुपाधिजाः[18] ॥ ४८ ॥

---

(1) M reads चित्रकाच. (2) But compare रसें.स. Chap. XI. v. 28, which differs from the above in certain points. (3) K reads समोत्थैते, which is incorrect. M reads तन्मात्रित्. (4) K reads पुनः. After this śloka we find नागशुद्धिः in the MS. M. (5) K has वर्जितः, which is gram. erroneous. (6) K has ततस्त्रीगुणनैवस्त्रं, which is partly inc. [नैव=वस्त्र.] (7) M reads भावितम्. (8) त्रि-फलामूलवह्नित्वात्, a variant in K. (9) K reads erroneously वृहकन्या. (10) K reads निम्बद्वारे, which has no clear sense. (11) K has गुड्डा. M has वृच. (12) K reads श्वेत. (13) K reads इष्टका. M reads काञ्चिकोर्णाभिः. (14) K has मर्दितं ततः. (15) K and M read सत्वं. (16) M reads चात्मभावात् प्रकाशयेत्. (17) M reads पाशकेन. (18) K reads नाशमुपाधिमा. M reads नाशमुपाधिकाः.

सप्तवारं काकमाच्या गतदोषं[1] विमर्दयेत् ।
पातयेत्[2] सप्तवारं च गिरिदोषं त्यजेद्रसः[3] ॥ ४९ ॥
चेत्रदोषं त्यजेद्देवि गोकर्णरसमूर्च्छितः ॥ ५० ॥
कार्पास[4]पत्रनिर्यासे खिन्नस्त्रिकटुकान्विते[5] ।
सप्तकञ्चुक[6]निर्मुक्तः सप्ताहाज्जायते रसः ॥ ५१ ॥
काकमाची[7] जया ब्राह्मी[8] गाङ्गेरी[9] रक्तचित्रकः[10] ।
मण्डूकी[11] मुद्गपर्णी च शृङ्गवेरं रसाङ्कुशः[12] ॥ ५२ ॥
देवदाली[13] शङ्खपुष्पी काकजङ्घा शतावरी ।
कुमारी भृङ्गराजश्च निर्गुण्डी ग्रीष्मसुन्दरः[14] ॥ ५३ ॥
शूलिनी शूर्पपर्णी च[15] गोजिह्वा चीर[16]कञ्चुकः ।
तद्रसैर्मर्दितः[17] पात्यः[18] सप्तधा निर्मलो भवेत् ॥ ५४ ॥
ताम्रेण[19] पिष्टिकां कृत्वा पातयेदूर्ध्वपातने[20] ।

---

(1) K has गतदेह, which has no clear sense. (2) M reads पाचयेत्. (3) M reads जयेद्रसः. (4) K reads कर्पास. (5) K reads त्रिकटुकान्वितः. खिन्नं त्रिकरकान्विते, a variant in M. (6) M reads कञ्चुकि. (7) K reads काकमाचि. (8) M reads ब्रह्मी. (9) K reads मार्जारी. (10) M reads रक्तचित्रकम्. (11) K reads मण्डूका. M reads मण्डाकी. (12) K has रसांकुशः. M has शृङ्गिवेर. (13) देवताली is the reading in M. (14) ग्रीष्मसुन्दरम् is the variant in M. (15) च is wanting in K. M reads शूर्पपाली च. (16) K reads चिर, which is inc. (17) K reads सर्वतः. M reads मर्दितं, which is gram. inc. (18) K reads पात्यं. M reads पात्य. Both are gram. inc. (19) K reads ताम्रेन. रस.स. reads गन्धेन. (20) K reads ऊर्ध्वपातने, which is an error of the scribe. But रस.स. reads ऊर्ध्वभाजने.

वङ्गनागौ परित्यज्य शुद्धो भवति सूतकः ॥ ५५ ॥[1]
मर्दित[2]स्त्रिफलाशिग्रुराजिका[3]पटुचित्रकैः ।
ऊर्द्धभाण्डगतः पाच्यः प्रदीप्तैरुपलैरधः[4] ॥ ५६ ॥
रुध्यम्बुजनिरोधेन लब्धापायो भवेद्रसः ।
कर्कोटी[5]कञ्चुकीबिम्बी-सर्पाक्ष्यम्बुजसंयुतम् ॥ ५७ ॥
रसं नियामके दद्यात् तेजस्वी निर्मलो भवेत् ।
एवं विशोधितः सूतो भद्राष्टांशविशोषितः ॥ ५८ ॥[6]
क्षुद्राम्ललवणक्षार[7]-भूखगोषणशिग्रुभिः[8] ।
राजिकाटङ्कणयुतैरारनाले[9] दिनत्रयम् ।
स्वेदनाच्छोषितो देवि ग्रासार्थी[10] जायते रसः ॥ ५९ ॥[11]
व्योमसत्त्वादिबीजानि रसजारणशोधने[12] ।
तन्ममाचक्ष्व देवेशि[13] किमन्यच्छ्रोतुमिच्छसि ॥ ६० ॥

---

(1) This hemistich closely agrees with रस.स. (vide Chap. XI. v. 31.) (2) M reads मर्दित, which is gram. inc. (3) M reads रासका. (4) प्रदीप्तरुकफलैरध, a variant in M, which appears to be inc. (5) M reads कर्कटी. [Vide रस.स. Chap. XI. vs. 41 and 42.] (6) The ślokas 57 and 58 are not found in K. (7) क्षौद्र-सलवणक्षारः, a variant in M. (8) यूषगोषणशिग्रुभिः, a variant in K. (9) K reads क्षारनालेः. (10) K reads ग्रासार्थि, which is gram. inc. M reads ग्रासार्थी. (11) The 43rd śloka in रस.स. Chap. XI. mostly agrees with the 59th śloka of this text. (12) रसे जारण-शोधने, a variant in K. रसो जारय शोषिते, a variant in M. Both of these readings do not convey a clear sense. (13) This charana is not found in M.

इति श्रीपार्व्वतीपरमेश्वरसंवादे[1]
रसार्णवे रससंहितायां
रसशोधनो नाम[2]
दशमः पटलः ॥१०॥

## एकादशः पटलः ॥

श्रीदेव्युवाच[1] ।
लक्षणं शोधनं चैव पारदस्य श्रुतं मया ।
चारणं जारणं चैव श्रोतुमिच्छामि भैरव ॥ १ ॥
श्रीभैरव उवाच[2] ।
सर्व्वपापक्षये जाते[3] प्राप्यते रसजारणा[4] ।
तत्प्राप्तौ प्राप्तमेव स्याद्विज्ञानं[5] मुक्तिकारणम् ॥ २ ॥
मोक्षाभिव्यञ्जकं[6] देवि जारणं साधकस्य तु ।
यावन्न जार्य्यते[7] सूतः तावत्तु न च निर्वृतिः[8] ॥ ३ ॥

---

(1) This is wanting in M. (2) K and M read रसशोधनं नाम.

(1) M has only देवी. (2) M has only भैरवः. (3) K reads सर्वपापक्षयं तस्य. (4) K reads रसजारणात्. (5) M has विज्ञानं. (6) M reads मोक्षाभिव्यञ्जनं. (7) यावत् सुजीर्यते, a variant in K. यावन्न जायते, a variant in M. (8) K has an incomplete charana—तावन्न च तिष्ठति.

खल्वस्तु पीठिका[1] देवि रसेन्द्रो लिङ्गमुच्यते ।
मर्दनं वन्दनं[2] तस्य ग्रासः पूजा[3] विधीयते ॥ ४ ॥
यावद्दिनानि वह्निस्थो जार्य्यते[4] धार्य्यते रसः ।
तावद्युगसहस्राणि शिवलोके महीयते ॥ ५ ॥
दिनमेकं रसेन्द्रस्य यो ददाति हुताशनम्[5] ।
द्रवन्ति तस्य पापानि कुर्व्वन्नपि न लिप्यते ॥ ६ ॥
जारणा द्विविधा बाल[6]-जारणा वद्धजारणा[7] ।
तत्रादौ परमेशानि वक्ष्यते बालजारणा ॥ ७ ॥[8]
गगनं जारयेदादौ सर्व्वसत्त्वमतः परम् ।
ततो माक्षिकशुद्धं च[9] सुवर्णं तदनन्तरम् ॥ ८ ॥
गर्भस्थं द्रावयित्वा तु[10] ततो वाह्यद्रुतिं[11] द्रवेत् ।

---

(1) K reads खल्वं तु पिंचिका. M reads खल्लम्. (2) M has चर्दनं, which is incorrect. (3) K reads पूजी, which is incorrect. (4) M reads जारणा, which seems to be gram. inc. (5) M has सिताशनम्, which has no clear sense. (6) K reads बाला, M reads विविधा बाल. (7) K reads जारणादभ्रगुपासना, which is unintelligible. वद्धजारणा will be explained in the 13th Paṭala. (8) This hemistich is not found in M. [Vide रस.स. Chap. VIII. vs. 65 and 66, which state जारणा first as त्रिधा, and next as द्विविधा.] (9) K has माक्षिकशुद्धे च. We do not find this charaṇa and the next in M. (10) गर्भे संद्रावयित्वा तु, a variant in K, which is gram. inc. (11) M reads ग्रासद्युतिं, which seems to be inc. [Vide रस.स. Chap. VIII. v. 72, wherein वाह्यद्रुति is explained.]

सितं सितेन द्रव्येण रक्तं रक्तेन रञ्जयेत् ॥ ९ ॥
सारणं क्रामणं ज्ञात्वा ततो वेधं प्रयोजयेत् ॥ १० ॥[1]

॥ चारणजारणमन्त्रः ॥

ॐ नमोऽमृतलोहाय परामृतरसोद्भवाय हुं स्वाहा ॥११॥
सर्व्वसत्त्वोपकाराय भगवन् त्वदनुज्ञया ।
जारणं कर्त्तुमिच्छामि ग्रासं गृह्ण[2] मम प्रभो ॥ १२ ॥
कुरुष्वेति शिवेनोक्तं ग्राह्यमेव[3] सुबुद्धिना ॥ १३ ॥
शृणु देवि प्रवक्ष्यामि व्योमजारणमुत्तमम् ।
पत्राभ्र[4]जारणं सत्त्वजारणञ्चेति तद्विधा[5] ॥ १४ ॥
निर्मुखं समुखं[6] चैव वासनामुखमेव च ।
एकैकं त्रिविधं तच्च तद्वक्ष्याम्यानुपूर्व्वशः[7] ॥ १५ ॥
वैक्रान्त[8]वज्रसंस्पर्शात्[9] दिव्यौषधिबलेन वा ।
निर्मुखो भक्षयेद्देवि[10] क्षणेन गगनं रसः[11] ॥ १६ ॥

---

(1) This hemistich is wanting in M. (2) K reads गृह्य. M reads गृह्णं. Both the readings are gram. inc. [गृह्ण is generally used by Rishis, though the correct form is गृहाण.] (3) भावमेव सुबुद्धिमान्, a variant in K. वाह्यमेव, a variant in M. (4) M reads पत्राभ्रू, which appears to be incorrect. (5) K reads erroneously तद्विधा. (6) K has निमुख. M has सम्मुखं. रस.स. reads—"समुखा निर्मुखा चेति जारणा द्विविधा पुनः ॥" "इयं हि सम्मुखा प्रोक्ता जारणा मृगचारिणा ॥" (Chap. VIII, vs. 66 and 69.) (7) K and M read तद्वक्ष्याम्यनुपूर्वशः. (8) M reads वैक्रन्त, which is inc. (9) K and M read संस्पर्श (without any suffix), which seems to be inc. (10) लक्षयेद्देवि, a reading in K. (11) M reads रसम्, which is gram. erroneous.

हेमकर्म्मणि हेमैव तारे तारो मुखं[1] भवेत् ॥ १७ ॥
तप्तखल्लकृता पिष्टिः[2] स्वल्प[3]मल्पाल्पमभ्रकम् ।
अम्लवेतस[4]जम्बीरवीजपूराम्लभूषणैः[5] ।
मर्दितं[6] चरते देवि सेयं समुखजारणा[7] ॥ १८ ॥
क्षारत्रयं[8] पञ्चपटु[9] काञ्जी[10]-काशीसगन्धकम् ।
माक्षिकं चाम्लसंयुक्तं ताम्रपात्रे तु जारयेत्[11] ॥ १९ ॥
एतच्चाभिषवाद्[12]दिव्यं कारयित्वा विचक्षणः ।
जारणार्थञ्च वीजानां[13] वज्राणाञ्च विशेषतः ॥ २० ॥
तस्मिन्नावर्त्तितं नागं वङ्गं[14] वा सुरवन्दिते ।
निषेवयेच्छतं वारं न रसायनकर्म्मणि ॥ २१ ॥
अनेन सकलं देवि[15] चारणावस्तु भावयेत्[16] ।
क्षाराम्ले[17] भावितं व्योम रजसा प्रथमेन च ॥ २२ ॥

---

(1) र.स. defines मुख thus :—"शुद्धं स्वर्णं च रूप्यं च वीजमित्यभिधीयते ॥१७॥ चतुःषष्ट्यांशतो वीजप्रक्षेपो मुखमुच्यते । १८ ।" (Chap. VIII.) (2) तप्त खल्ले कृतापिष्ट, a variant in K. M reads कृताविष्टि. (3) K reads सूक्ष्म. (4) M reads चाम्लवेतस. (5) K has वीजपूराम्लभूषणै, which is gram. inc. (6) M reads मृदित. (7) K has जारणात्. M has समुखजारणा. (8) K reads क्षारद्वयं. (9) K reads पञ्चलवण. M reads पञ्चपटुः, which seems to be incorrect. (10) K has कांजि. M has काञ्चि. (11) K reads चारयेत्. (12) एतच्चाभिषवा, a variant in K. (13) जारणार्थे तु वीजानि, a variant in K. (14) M reads वङ्ग. (15) अनेन स चारणां यस्तु, a variant in K. (16) भावयेत्तद्विचक्षणः, a variant in K. (17) K reads क्षाराम्ल.

स्रष्टिभयोदककणा[1] तुम्बुरुद्रवमर्दितम्[2] ।
चरेज्जरेद्वा पुष्टितं[3] यवचिञ्चारसेन च ॥ २३ ॥
शतावरी गदा रम्भा मेघनादा पुनर्नवा ।
शिग्रुको यवचिञ्चा च भावितं तद्रसैः क्रमात् ॥ २४ ॥
मूलं छिलमुचायासु[4] कौवेरीमूलमेव च ।
कदलीमुसलीशिग्रु-ताम्बूलीवाणपोलुकम्[5] ॥ २५ ॥
अलम्बुषा बला कोल मास्फोटः खरमञ्जरी ।[6]
तुम्बुरुश्चित्रकशाकं वाप्येषामेकरसेन तु ।
काञ्जिकाम्लौषयुक्तेन चिटिलं खिन्नमभ्रकम् ॥ २६ ॥
कासीसतुवरीसिन्धु[7]-टङ्कणक्षारसंयुतः[8] ।
पूर्व्वाभिषव[9]योगेन सूतकश्चरति क्षणात् ॥ २७ ॥
गोलको[10] भवति क्षिप्रं सर्व्वसिद्धिप्रदायकः[11] ॥ २८ ॥
गृहीत्वा देवि धान्याम्ल-मम्लवर्गेण[12] संयुतम् ।

---

(1) K reads सृष्टो. M reads सष्ट. Both the readings are incorrect. (2) M reads तुम्बुरुरसमर्दितम्. (3) यंजमेद्वी पटौ चैक, a variant in K, which seems to be unconnected with the text. (4) K reads erroneously छित्तमुयायासु. (5) K has वाणपोलुका. (6) This hemistich and the next two are not found in K. (7) K reads कौशीसतुवरीसौंधु, which is inc. (8) K has संयुतं, which is gram. inc. M has टङ्कणं क्षारसंयुतः, which is partly inc. (9) K reads पूर्वाभिषया, which is inc. (10) K has गोलकं. (11) सर्वसिद्धीप्रदायकं, a variant in K. M reads प्रदायकम्, which is gram. inc. (12) मम्लवर्गेन is the reading in K, which is not correct.

क्वाथयित्वाभ्रकं तत्तु[1] स्नुहीक्षीरेण[2] मर्द्दयेत् ॥ २८ ॥
आरण्य[3]गोमयेनैव कपोताख्यं पुटं[4] ततः ॥ ३० ॥
कदलीकन्दनिर्यासै[5]र्मूलकन्दरसेन च ।
काकमाची च मीनाक्षी अपामार्गो मुनिस्तथा[6] ॥ ३१ ॥
एरण्डमार्द्रकञ्चैव[7] मेघनादा[8] पुनर्नवा ।
एकैकस्य द्रवैरेव[9] पुटैकैकं प्रदापयेत्[10] ॥ ३२ ॥
वज्राक्षीरेण संयुक्तं दोलायन्त्रेण[11] पाचयेत् ।
छायाशुष्कं ततः कृत्वा चणकाम्लेन संयुतम्[12] ॥ ३३ ॥
नवसारं च काशीसं वचा[13] निम्बं तथैव च ।
अभ्रस्य[14] षोड़शांशेन एकैकं तत्र[15] निक्षिपेत् ॥ ३४ ॥
निधाय[16] ताम्रपात्रे तु घर्षयेत्तच्च[17] सुव्रते ।
नववारं[18] ततो देवि लोहपात्रे तु जारयेत् ॥ ३५ ॥
रसेन सह देवेशि चणकाम्लेन काञ्जिकम् ।

---

(1) K reads क्वाथयित्वा भ्रम त तु. (2) M reads स्नुहिक्षीरेण. (3) M reads अरण्ये. (4) M reads कपोताख्यापुट. (5) M has निर्यासे. (6) K reads अपामार्गमुनी तथा. (7) K reads मार्द्रकश्चैव. (8) M reads मेघनाद. (9) एकैकरसद्रवैकेन, a variant in K (10) K has पुटकैक. M has सुदापयेत्. (11) M reads डोलायन्त्रे ण. (12) K reads भैरवि (13) M reads वसा. (14) K reads अभ्रकात्. (15) M reads तत्र. (16) M reads विडारी, which is unintelligible. (17) घर्षनं ये च, a variant in K, which has no sense M reads घर्षयत्तच्च. (18) K has नववारौ, which is absurd.

मृदग्निना तु निःक्वाथ्यं प्रहरार्द्धेन जायते ॥ ३६ ॥
सोमवल्लीरसैः पिष्ट्वा व्योम सौवर्चलान्वितम् ।
शनैः शनैर्हंसपाद्या[1] दापयेच्च पुटत्रयम् ॥ ३७ ॥
सोमवल्लीरसेनैव सप्तवारञ्च दापयेत्[2] ।
पातयेन्मृण्मये भाण्डे[3] रसेन सह संयुतम् ॥ ३८ ॥
मूलं वल्लीषुपुङ्खाया[4] गव्यक्षीरेण घर्षयेत्[5] ।
कल्केन लेपयेत् सूतं गगनञ्च तदूर्द्ध्वगम्[6] ॥ ३९ ॥
तापयेद्रवितापेन निर्मुखं ग्रसते क्षणात् ।
जायते पिष्टिका शीघ्रं नात्र कार्य्या विचारणा ॥ ४० ॥
तिलपर्णीरसेनैव गगनं भावयेत् प्रिये[7] ।
मर्दनाज्जायते पिष्टी[8] नात्र कार्य्या विचारणा ॥ ४१ ॥
मुण्डीनिर्यासके नागं[9] बहुशस्तु निषेचयेत् ।[10]
तेनाभ्रकं तु संप्लाव्य[11] भूयोभूयः पुटे दहेत् ॥ ४२ ॥

---

(1) The portion commencing from रसेन सह and ending in हंसपाद्या is not found in M. (2) K reads तापयेत्. (3) दापयेन्मृण्मये पात्रे, a variant in K. (4) K has शितेषुपुङ्खाया. (5) गोक्षीरे सह पेषयेत्, a variant in K, which is gram. inc. (6) K reads गगनं तदधोर्द्ध्वग. (7) गगनं तैन भावयेत्, a reading in K. (8) M reads पिष्टिः. (9) K reads नापि. (10) After this charana we find in K the following hemistich :—कल्केन लेपयेत् सूत गगनं तदधोर्ध्वगं, which we have not adopted, seeing it to be the repetition of the latter half of the 39th śloka. (11) K reads संभाव्य.

चित्रकार्द्रकमूलानामेकैकेन[1] तु सप्तधा ।
प्रावितव्यं[2] प्रयत्नेन गन्धकाभ्रकचूर्णकम् ॥ ४३ ॥
नागमुण्डीरसस्तन्य[3]रजो[4]शुक्राम्लभावितम् ।
षोड़शांशेन तद्ग्रासं दोलायां[5] तु चरेद्रसः ॥ ४४ ॥
चतुःषष्टि[6]गुणं देवि द्वात्रिंशद्गुणमेव वा[7] ।
अथवा षोड़शगुणं तथाष्टगुणमेव वा[8] ।
चतुर्गुणं वा[9] द्विगुणं समं वा चारयेत्[10] प्रिये ॥ ४५ ॥
परमभ्रकसत्त्वस्य[11] जारणं शृणु पार्व्वति ॥ ४६ ॥
व्योमसत्त्वं समांशेन ताप्यसत्त्वेन संयुतम्[12] ।
स खल्वेदं[13] चरेद्देवि गर्भद्रावो[14] भवेद्रसः ॥ ४७ ॥
नागाभ्रं देवि वङ्गाभ्रं[15] तीक्ष्णाभ्रं[16] करकाभ्रकम्[17] ।
ताराभ्रं देवि[18] हेमाभ्रं[19] रसगर्भेण[20] जारयेत् ॥ ४८ ॥

---

(1) K reads मूलानि. (2) All the texts have this reading, which is gram. erroneous, the correct form being प्लावयितव्यं. (3) K reads नागं मुण्डीरसस्तन्य. (4) K reads रसं शुक्राम्लभावितम्. (5) M reads डोलायां. (6) K reads चतुषष्टि, which is inc. (7) K reads च. (8) K and M read च, which is not accurate. (9) M reads च. (10) K has सम चारयते. (11) K reads पत्रस. (12) K reads erroneously पुंसकं. (13) K has संकल्पेन. (14) K reads गर्भद्राविः. M reads गर्भद्रावं. Both the readings are gram. incorrect. (15) M reads वङ्काभ्रं. (16) K reads तिक्ष्णाभ्रं. (17) K reads भास्कराभ्रकम्. (18) K reads तु, which mars the metre. (19) M reads ग्रल्लाभ्रं. (20) K reads रसगर्भे, thus wanting one letter.

पूर्व्वाभिषेक[1]योगेन गर्भे द्रवति मर्दनात् ॥ ४९ ॥
चतुःषष्ठ्यंशकः पूर्व्वः[2] द्वात्रिंशांशो द्वितीयकः[3] ।
तृतीयः षोड़शांशस्तु[4] चतुर्थोऽष्टांश एव च[5] ॥ ५० ॥
पञ्चमस्तु चतुर्थांशः[6] षष्ठो द्व्यंशः प्रकीर्त्तितः[7] ।
ग्रासो रसस्य दातव्यः[8] ससत्त्वस्याभ्रकस्य च[9] ॥ ५१ ॥
चतुःषष्ठ्यंशके[10] ग्रासे दण्डधारी भवेद्रसः ।
जलौकावद्द्वितीये च[11] ग्रासयोगे सुरेश्वरि ॥ ५२ ॥
ग्रासेन तु तृतीयेन[12] काकविष्ठासमो भवेत्[13] ।
ग्रासेन तु चतुर्थेन दधिमण्डसमो भवेत् ॥ ५३ ॥
पञ्चमे चारिते ग्रासे नवनीतसमो[14] भवेत् ।
षष्ठे तु गोलकाकारः[15] क्रमाज्जीर्णस्य लक्षणम् ॥ ५४ ॥
काञ्जिकेन निषिक्तेन रक्तव्योम शतप्लुतम्[16] ।

(1) K reads पुर्वाभिम्निक, which is incorrect. (2) चतुषष्टांशक पूर्वा, an incorrect variant in K. (3) द्वात्रिंशांश द्वितीयक, a variant in K. (4) तृतोय षोडशांश्चिन, a variant in K. (5) चतुर्थाष्टांशमेव च, a variant in K, which is inc. (6) पञ्चमोपि चतुर्थांशो, a variant in K. (7) षष्ठो द्विसम्प्रकीर्त्तितः, a variant in M. (8) K reads ग्रासा रसस्य दातव्याः. M reads ग्रासो रसस्य दातव्य, wherein the last term is inc. (9) K has सत्वस्याभ्रकजस्य वा. (10) K reads चतुषष्टांशतो. M reads चतुष्षष्टांशता. Both are inc. (11) जलूकवद्द्वितीये तु, a variant in M. (12) M reads तृतीयस्य. (13) येन काकविष्ठा भवेत्, a variant in M. (14) K reads नवनीतः समो, which is not correct. (15) K reads गोलकाकारं. (16) K reads रक्ते व्योमम, which is inc. तेन व्योम is the reading in M.

खल्लान्तश्चारयेत्तच्च[1] शुल्ववासनया[2] सह ॥ ५५ ॥
हेम तारञ्च संघृष्य[3] खल्ले तत्र रसं न्यसेत्[4] ।
काञ्चीसहितकाशीसं[5] सिन्धुना चरते रसः ॥ ५६ ॥
हेम सीसन्तु संघृष्य[6] रसं तत्र प्रदापयेत् ।
नागहेमयुतं व्योम समजीर्णं द्रुतं[7] भवेत् ।
अभ्रकोपरसान्[8] क्षिप्रं सुखेनैव चरत्ययम् ॥ ५७ ॥
तारं वङ्गं च संघृष्य[9] रसं तत्र प्रदापयेत् ।
नागहेमयुतं व्योम समजीर्णं द्रुतं भवेत् ।[10]
सुखेन चरते व्योम तारकर्म्मणि शस्यते[11] ॥ ५८ ॥
समुखं निर्मुखं[12] वापि यत्नतश्चारयेन्नभः[13] ॥ ५९ ॥
चारणां त्रिविधामेवं[14] कृत्वा गर्भद्रुतिं रसे ।
जारयेत् स्वेदयेत् पिण्डं[15] परिणामक्रमैस्त्रिभिः[16] ॥ ६० ॥
कटुक्ल[17]क्षारगोमूत्र-स्नुह्यर्कचौरैः प्रलेपितम्[18] ।

---

(1) खल्वे तु चालयेत्तच्च, a variant in K. (2) K reads शुल्व वासनया. M reads वासनाया, which is inc. (3) K reads सस्थाप्य. (4) खल्वे तत्र च संन्यसेत्, a variant in K. (5) कांचीसहितकाशीस, a variant in M. (6) K reads संग्रह्य. (7) M has समजीर्णद्रुत (8) M reads अभ्रकात्यरसान्. (9) K reads सग्रह्य. M reads संघृष्य. (10) This hemistich is not found in K. (11) K reads समुख. (12) निर्मुखं समुख is the reading in K. सम्मुख निर्मुख is the reading in M. (13) K reads ततः, which is not accurate. (14) M reads जारणां त्रिविधामेव. (15) K reads incompletely—जारयेत् पिण्डे. (16) M reads incompletely—परिक्रमैस्त्रिभिः. (17) M reads पटुक्ष. (18) स्नुहि-चौरे प्रलेपित, a variant in M.

वह्निस्थं बद्धं वस्त्रेण[1] भूयो ग्रासं निवेदितम्[2] ।
क्षारारनालतैलेषु स्वेदयेन्मृदुनाग्निना ॥ ६१ ॥
क्रमेणानेन देवेशि जायते दिवसैस्त्रिभिः[3] ।
यन्त्रादुद्धृतमात्रं तु[4] लोहपात्रे स्थितं रसम्[5] ॥ ६२ ॥
साम्लेन[6] काञ्जिकेनादौ क्षालितं वस्त्रगालितम् ।
पात्रे सुखोष्ण[7]हस्तेन यावत् शेषं विमर्दयेत् ॥ ६३ ॥
चतुर्गुणेन वस्त्रेण पीड़ितो निर्मलश्च सः[8] ॥ ६४ ॥
गालनक्रियया ग्रासे सति निष्पेषनिर्गते[9] ।
स[10] भवेद्दण्डधारी च जीर्णग्रासस्तथा रसः[11] ॥ ६५ ॥
अजीर्णे पाचयेत् पिष्टीं[12] स्वेदयेन्मर्दयेत्तथा ।
वासवाम्ल[13]प्रयोगेण जीर्णे ग्रासं तु दापयेत्[14] ॥ ६६ ॥
इष्टिकागुड़दुग्धोर्णा[15]-राजीसैन्धवधूमजैः[16] ।

---

(1) K has बद्धवस्त्रेण. M has बध्वे वस्त्रेण. (2) भूर्जं चार निवीध्यताम्, a variant in M. (3) M has वा त्रिभिस्त्रिभिः. (4) M reads मात्र तु. (5) M has रसः, which is gram. inc. (6) M reads सांचन, which is perhaps काञ्चेन. (7) M has सुखोष्णे. (8) विहतो निमल रसः, a variant in M, wherein the second term is inc. (9) सांते विशेषनिर्गते, a variant in K. (10) M reads न, which is an error of the scribe. (11) We do not find तथा रसः in K. (12) K reads त्याजयेत् पिष्टीं. M reads पिष्टं. (13) K has वासनाम्ल. (14) M reads तापयेत्. (15) B reads दुग्धार्णं. M reads इष्टकागुड़दिग्धोर्णं. (16) M reads धूमकैः.

षोड़शांशैः स धान्याभ्रैः[1] मर्द्यः स्वेद्यश्च पारदः[2] ॥ ६७ ॥
निर्मलीकरणार्थं तु[3] ग्रासे ग्रासे[4] पुनः पुनः।
जीर्णाभ्रो जीर्णबीजोऽपि रागान् गृह्णाति[5] निर्मलः ॥ ६८ ॥
क्रमेणानेन दोलायां[6] चार्य्यं[7] ग्रासचतुष्टयम्।
ततः कच्छपयन्त्रेण ज्वालनं बन्धनं[8] क्रमात् ॥ ६९ ॥
ऊर्द्धाधश्चाष्टमांशेन विड़ं दत्त्वापि जारयेत्[9]।
समजीर्णाभ्रकः सूतः शतवेधी[10] भवेत् प्रिये ॥ ७० ॥
सहस्रवेधी द्विगुणे त्रिगुणेऽयुतवेधकः।
चतुर्गुणे लक्षवेधी स भवेद्भूचरो रसः ॥ ७१ ॥
जीर्णे पञ्चगुणे[11] देवि ब्रह्मायुर्जायते रसः[12]।
आयुस्तु[13] षड्गुणे[14] विष्णोः कोटिवेधी भवेद्रसः ॥ ७२ ॥
रसस्य सर्व्वदोषास्तु[15] षड्गुणेनाभ्रकेन तु[16]।

---

(1) B has an incomplete charaṇa षोड़शांशैः स धाभ्रैः. M has षोड़शांशैः धान्याभ्रैः. (2) B reads स पारदः. K reads स्वेद्यः, which is incorrect. (3) K reads करणार्थे तु. (4) The second ग्रासे is omitted in B. (5) रागानाश्नाति is the variant in B. नागाद्गृह्णाति is the variant in M. (6) M reads डोलायां. (7) B reads चार्थ्यं. K reads चार्य. Both are inc. (8) B has ज्वालनं वर्धन, which is inc. M has मर्दनं. (9) B reads तथापि instead of दत्त्वापि. दिव्यौ दत्त्वापि जीर्य्यते, a variant in K. दत्वा विचारयेत्, a reading in M. (10) B reads शतवेधि, which is inc. (11) M reads पञ्चगुणं, which is not correct. (12) B and M read नरः. (13) B reads आयुश्च. (14) K reads षट्गुणे. M reads षड्गुणौ. (15) M has सर्व्वदोषांस्तु, which seems to be incorrect. (16) K reads षट्गुणेन. M reads षड्गुणेनाभ्रकस्य तु.

जीर्णेन नाशमायाम्ति[1] नात्र कार्य्या विचारणा ॥ ७३ ॥
रसराजे[2] यदा जीर्णं[3] षड्गुणं गगनं[4] प्रिये ।
तदा[5] ग्रसति लोहानि त्यजेच्च मतिमात्मनः[6] ॥ ७४ ॥
धूमश्चिटिचिटिश्चैव[7] मण्डूकप्लुतिरेव च[8] ।
सकम्पश्च विकम्पश्च[9] पञ्चावस्था रसस्य तु ॥ ७५ ॥
कपिलोऽथ मिरुद्धारि[10]-विप्रुषश्चैव मुञ्चति[11] ।
अग्नौ तिष्ठति[12] निष्कम्पो व्योमजीर्णस्य लक्षणम् ॥ ७६ ॥
समजीर्णो भवेद्बालो[13] यौवनस्थ[14]श्चतुर्गुणम् ।
वृद्धस्तु षड्गुणं जीर्णः[15] कुर्य्यात्[16] कर्म्म पृथक् पृथक् ॥७७॥

---

(1) K has जीर्णं जीर्णं समायाति. M has जीर्णेन नाशका याम्ति. The sense of these readings is not clear. (2) B reads रसराजौ. (3) K reads जीर्णं. M reads यथा जीर्णं. (4) M has गगन षड्गुणं. (5) B has यदा, which is inc. (6) Both B and K read मतिमात्मरः, which has no clear sense. (7) धूम चिटि चिटिश्चैव, a variant in K. (8) मंडुकप्लुतिरेव च, a variant in B. K has मन्डूकप्लुतिमेव च. Both the readings seem to be inc. (9) K reads सकप च विकप च. (10) M reads कपिलोत्थनिरुद्धानि. (11) B reads विप्रुषश्चैव In K, the whole hemistich seems to be incorrect, which is as follows---कपिलं,त्यनिपिप्लुति-मेव चष षेव मुञ्चति (12) K reads तिष्ठति, which is gram. incorrect. (13) समीवर्णो वभिद्बालो, an incorrect variant in K. (14) B reads यौवनर्थ, which has no sense. K reads यौवनस्थ (without विसर्ग), which is gram. inc. (15) B has वृद्ध षड्गुण,जीर्णस्तु. K has वृद्धः षड्गुण-जीर्णस्तु. M has वृद्धस्तु षड्गणो जीर्णं. We have adopted the above reading after collating all the texts. (16) Both B and K read तदा.

बालस्तु पत्रलेपेन कल्कयोगेन यौवनः[1]।
वृद्धो[2] विध्यति लोहानि जारितः सारितोऽथवा ॥ ७८ ॥
कुमारस्तु रसो देवि न समर्थो रसायने।
यौवनस्थो रसो[3] देवि क्षमो देहस्य रक्षणे ॥ ७९ ॥
जरावस्थो रसो यत्र देहे लोहेन संक्रमेत्[4]।
अभावेऽभ्रकसत्त्वस्य[5] कान्तसत्त्वं प्रदापयेत् ॥ ८० ॥
कान्तस्य चाप्यभावे[6] तु तीक्ष्णलोहन्तु दापयेत्।
अनेन क्रमयोगेन सर्व्वसत्त्वानि जारयेत्[7] ॥ ८१ ॥
एकोऽपि हेमसंयुक्तचामीकरकरः क्षणात्।
गन्धकात् परतो नास्ति रसेषूपरसेषु वा[8] ॥ ८२ ॥
पूर्व्वोक्तयन्त्रयोगेन[9] द्विरष्टगुणगन्धकम्[10]।
अथवा द्वादशगुणं षड्गुणं[11] वापि जारयेत्[12] ॥ ८३ ॥
माक्षिकं[13] सत्त्वमादाय पादांशेन तु[14] जारयेत्।
ततोऽपि सर्व्वसत्त्वानि द्रावयेत् सूतगर्भतः ॥ ८४ ॥

(1) M reads योवनः, which is incorrect. [Here अर्शआदित्वात् अच्.]
(2) K reads वृद्धौ, which is incorrect. (3) K reads यौवनस्थरसो.
(4) K reads संक्रमे, which is an error of the scribe. M reads देहलाहय.
(5) अभावे अभ्रसत्वस्य, a reading in M. (6) K reads वाप्यभावे.
(7) M reads रञ्जयेत्. (8) K reads च. From this hemistich, some portion is wanting in B. (9) M has पूर्वोक्तयागयन्त्रं च.
(10) K reads द्विरष्टगुणं गन्धकं, which is incomplete. (11) K has षट्गुणं (12) M has वा विजारयेत्. (13) M reads माक्षिक।
(14) तु is wanting in K.

हेमपावकयोः सख्यं तथा[1] काञ्चनसूतयोः ।
वह्निसूतकयोर्वैरं तयोर्मित्रेण मित्रता[2] ॥ ८५ ॥
धन्विको[3] यवचिञ्चा च खण्डभट्टश्च रागिणी[4] ।
दोलास्वेदेन[5] तत् पक्वं हेमजारणमुत्तमम् ॥ ८६ ॥
पलाशभस्मापामार्गौ[6] यवक्षारश्च काञ्जिकम्[7] ।
सौवर्चलं च कासीसं[8] सामुद्रं सैन्धवं तथा ॥ ८७ ॥
आसुरी टङ्कणश्चैव[9] नवसार[10]स्तथैव च ।
कर्पूरश्चैव माक्षीकं[11] समभागानि कारयेत् ॥ ८८ ॥
क्षुद्राकदुग्धेदेवेश्रि[12] मूषा[13]लेपन्तु कारयेत् ।
विड़चूर्णं ततो दत्त्वा कनकं जारयेत् प्रिये ॥ ८९ ॥
शृणु देवि प्रवक्ष्यामि भूचराख्यन्तु[14] जारणम् ॥ ९० ॥

---

(1) M reads सूत, which creates a tautology. (2) तयोर्मित्रेण मित्रता, a variant in M. (3) K reads धंजोल. (4) K reads incompletely—खमटेन गाक्रिणी. The meaning of खण्डभट्ट is unintelligible. (5) M reads दोलास्वेदेन. (6) K reads पमार्गे, which seems to be incorrect. (7) M reads काञ्चिकम्. (8) K reads कौशीसं, which is an error of the scribe. M reads कासीसं. (9) K has आ······री टङ्कणं चैव, which is incomplete. (10) M reads नागसार. (11) कर्पूर चैव माक्षिकं, a variant in K. (12) K reads क्षुद्राकदुग्ध-देवेश्रि, which appears to be inc. M reads क्षुद्राकदुग्ध, which is not also accurate here. (13) K reads मूषा, which is inc. (14) K has भूचराख्यान्. M has भूजराख्यान्. Both seem to be inc. ; since we see afterwards (in śloka 98) भूचरी जारणा and not भूचरो or भूजरी जारणा.

कृष्णं पीतं[1] तथा रक्तं[2] शुल्बे तीक्ष्णे च मेलयेत् ॥ ८१ ॥
शुल्बे तीक्ष्णं यदा चूर्णं[3] द्वाविंशतिगुणं प्रिये[4] ।
गन्धनागं ततोऽर्द्धं तु[5] क्रमेणैव तु मेलयेत् ॥ ८२ ॥
हेम्ना तु सह दातव्यं सूतकैकेन षोड़श[6] ।
गन्धनागं यदा जीर्णं[7] तदा[8] बद्धो[9] भवेद्रसः ।
हेम्नि जीर्णे ततोऽर्द्धेन[10] मृत[11]लोहेन रञ्जयेत् ॥ ८३ ॥
गन्धकेन हतं शुल्बं[12] माक्षिकं दरदायसम् ।
पुटेन मारयेच्छुद्धं हेम दद्यात् तु षड्गुणम्[13] ॥ ८४ ॥
सूतके हेमबीजं च यदा जीर्णं[14] चतुर्गुणम् ।
बद्धरागं विजानीयात् हेमाभो जायते रसः ॥ ८५ ॥
सारणायन्त्रमध्यस्थं तेनैव सह सारयेत्[15] ।
त्रिभाग[16]सारितं कृत्वा पुनस्तत्रैव[17] जारयेत् ॥ ८६ ॥

---

(1) K reads कृष्णपीतं. (2) M reads रक्तगुभ्रं. (3) शुद्धं यदा भवेज्जीर्णं, a variant in K ; after this, one charaṇa is wanting in it. (4) K reads द्वाविंशतिगुणं चैव न सारसयेच च, which is incomplete. (5) M reads ततोत्ये तु, which is unintelligible. (6) सूतकी चैव षोड़शं, a reading in K. (7) M reads यथा चूर्णं. (8) M reads तथा. (9) K reads मद्रो, which seems to be incorrect. (10) K has an incomplete charaṇa—हेमजीर्णे ता···न. (11) M has मृता, which is inc. (12) K reads सुल्वं. (13) हेम दद्यात् षड्गुणं, an incomplete variant in K. (14) K reads यदार्थं, which is an error of the scribe. M reads यथा जीर्णं. (15) M reads कारयेत्. (16) M reads चिभागं. (17) K reads पुनस्तेनैव.

जारित: सारितश्चैव पुनर्जारितसारित:[1] ।
सप्तशृङ्खलिका[2]योगात् कोटिवेधी[3] भवेद्रस: ॥ ९७ ॥
भूचरी जारणा प्रोक्ता—खेचरीं[4] जारणां शृणु ॥ ९८ ॥
क्षीरमुख्यानि रत्नानि[5] रसोच्छिष्टानि कारयेत् ।
कटुतुम्बस्य बीजानि तस्यार्धेन[6] तु दापयेत् ॥ ९९ ॥
महाङ्गारसमायुक्तं[7] कल्कं कुर्याद्विचक्षण: ।
वज्रमूषामुखे[8] चैव तन्मध्ये स्थापयेद्रसम् ॥ १०० ॥
कान्तकं कनकं चैव[9]-मेकीकृत्य[10] च मर्दयेत् ।
पद्मरागप्रलेपेन[11] रसे ग्रासं तु दापयेत्[12] ॥ १०१ ॥
एकादशगुणं यावत् पद्मरागं तु सूतके ।
रागजीर्णस्तु[13] देवेशि लिङ्गाकारो भवेद्रस: ॥ १०२ ॥
रक्षितव्यं[14] प्रयत्नेन लोकपालाष्टकेन च[15] ।

---

(1) K has an incomplete charana पुनर्जारित:. (2) K reads शृङ्खलिका. (3) K has an incorrect reading—कोटिवेधि. (4) K reads खेचरी. (5) K has an incomplete charana—क्षीरमयानि. M has क्षीरमुख्यानि, which seems to be an error of the scribe. (6) M reads तस्योर्ध्वेन. (7) K reads महाङ्गारसयुक्तं, which seems to be महाङ्गारसंयुक्तं. (8) K has वज्रमूष…खे. M has वज्रमूषामुखे. Both are inc. (9) K reads कनकं कनकं च, which is incomplete as well as tautological. (10) M reads मिलीकृत्य, which is not grammatical. (11) K has पद्मरागं प्रयत्नेन. (12) K reads जायते. M reads रसो in lieu of रसे. (13) M reads रागचूर्णन्तु. (14) K reads रंजितव्यं. (15) K has three letters only of this charana—ला……या……टु…….

षड्भागं सूतकेन्द्रस्य तेषु सर्व्वेषु दापयेत् ॥ १०३ ॥
भक्षितव्यं प्रयत्नेन[1] नत्वा च गुरुदेवयोः ।
सर्व्वसिद्धान्नमस्कृत्य देवताश्च विशेषतः ॥ १०४ ॥
मूर्च्छाङ्गदाहश्च[2] ततो जायते[3] नात्र संशयः ।
आत्मानमुत्थितं पश्येत् दिव्यतेजो[4]महाबलम् ॥ १०५ ॥
शङ्खकाहल[5]निर्घोषैः सिद्धविद्याधरैः सह ।
इच्छया विचरेल्लोकान् कामरूपो[6] विमानगः ॥ १०६ ॥
देवाश्च[7] यत्र लीयन्ते सिद्धस्तत्रैव लीयते ॥ १०७ ॥
पुनरन्यं प्रवक्ष्यामि जारणा[8]योगमुत्तमम् ॥ १०८ ॥
सुघृष्टं पादितं[9] सूतं सर्व्वदोषोज्झितं ततः[10] ।
शाकपल्लवसारेण विष्णुक्रान्ता[11]रसेन च ॥ १०९ ॥
पलाश[12]पुष्पतोयेन भावितं गन्धकं समम् ।
समं[13] कृष्णाभ्रसत्त्वञ्च रसकस्याष्टकं गुणम् ॥ ११० ॥
तीक्ष्णाश्मस्योरगस्यैव कूर्म्मयन्त्रेण जारयेत् ।

---

(1) After this we find two redundant charanas in K, which are as follow—रसे ग्रासं तु दापयेत् । रक्षितव्यं प्रयत्नेन. (2) मूर्च्छांगदाहं च, an incorrect reading in K. मूर्च्छादाहश्च, an incomplete reading in M. (3) K reads जायंते, which is gram. inc. (4) M reads incorrectly दिव्यतोजो. (5) K reads शंखकाहल, which appears to be incorrect. (6) K reads कामरूपो. (7) K reads देवा वै. (8) K reads जारणं. (9) K has सुदृढं पातितं. (10) This charaṇa is wanting in K. (11) M reads विष्णुक्रान्त. (12) K reads पालाश. (13) K reads सेव्यं.

काञ्चनं जारयेत् पश्चात् विड्योगेन पार्व्वति[1] ॥ १११ ॥
ततः सिद्धं[2] विजानीयात् देवं[3] शुल्वस्य दापयेत् ।
कर्म्मसंख्याप्रमाणेन नागो भवति काञ्चनम् ॥ ११२ ॥
अतः परं प्रवक्ष्यामि जारणाक्रममुत्तमम् ॥ ११३ ॥
बीजचूर्णानि तैलेन भावयित्वा पुनः पुनः ।
षोड़शांशेन तद्ग्रास[4]मङ्गुल्या मर्द्दयेच्छनैः ॥ ११४ ॥
आर्द्रकादि ततो योगाद्[5]-दातव्यं षोड़शांशतः[6] ।
भूर्जं[7] दत्त्वा ततो देयं दोलायन्त्रे[8] विनिक्षिपेत् ॥ ११५ ॥
अहोरात्रेण तद्बीजं सूतको ग्रसति[9] प्रिये ।
समुद्धृत्य[10] रसं देवि खल्ले[11] संमर्द्दयेत्ततः ॥ ११६ ॥
ततो यन्त्रे विनिक्षिप्य दिवारात्रं विड़ाग्निना[12] ।
तसं समुद्धृतं[13] यन्त्रात् तप्तखल्ले[14] विमर्द्दयेत् ॥ ११७ ॥
मर्द्दयित्वाभ्रके[15] पिण्डे क्षिप्त्वा तत्र पुटं ददेत् ।
ततो गर्भं पतत्याशु जारयेत् तत्[16] सुखेन तु ॥ ११८ ॥

---

(1) K reads पार्व्वती, which is not gram. correct. (2) K reads शुल्व. (3) K reads हन्त. (4) K reads स ग्रास. (5) K has योग. (6) K has षोड़श ततः. (7) K reads भूर्यं. (8) M reads डोलायन्त्रे. (9) सूतके ग्रसते is the reading in K, which is gram. incorrect. (10) K reads समुद्धृत, which is not gram. correct. (11) All the MSS. spell खल्ल, which is not corroborated by any lexicon. (12) K reads दीपाग्निना, which mars the metre. (13) M reads समुदित. (14) K has तदा खल्ल. (15) K reads मर्द्दयित्वा रसे. (16) This is wanting in K.

दोलायन्त्रे ततो दत्त्वा[1] आर्द्रपिण्डे नपुंसकम्[2]।
साहयेद्[3]दिवसे सूतो जरते ग्रसते ततः[4] ॥ ११९ ॥
समजीर्णं ततो यावत् दोलायन्त्रविचक्षणः[5]।
पश्चात् कच्छपयन्त्रेण समजीर्णं[6] तु पार्व्वति।
तं ग्रासद्वादशांशेन[7] कच्छपेन तु जारयेत् ॥ १२० ॥
यावदार्द्रक[8]योगं च गर्भद्रावणमेव च।
पश्चात्तं[9] देवि निक्षिप्य पुटं दद्याद्विचक्षणः ॥ १२१ ॥
अष्टांशेन ततो ग्रासं गर्भद्रावश्च पूर्व्ववत्[10]।
कन्दोदरे[11] सूरणस्य तं विनिक्षिप्य सूतकम्।
पुटेन्तु जारितस्तावत्[12] यावत् कन्दो न दह्यते[13] ॥ १२२ ॥
पादांशेन तु मूषाया[14] ग्रासः सूते[15] विधीयते।
पूर्व्ववच्च विड़ं दद्यात् गर्भद्रावणमेव च ॥ १२३ ॥
एवं[16] चतुर्गुणे जीर्णे सूतको बलवान् भवेत्।

---

(1) K reads दत्वा, which is inc. M reads डोलायन्त्रे. (2) This charana is wanting in M. (3) K has स्तंभ. (4) जारते ग्रसते रसः, a variant in K. (5) दोलायन्त्रेण विचक्षणः, a reading in K. M reads डोलायन्त्र. (6) K has an incomplete reading- -मजोर्णं (7) K reads ग्रास द्वादशांशेन. (8) M reads ग्रासादार्द्रक, which is not intelligible. (9) K reads यश्चाभ. M reads पश्चक Both are un intelligible. (10) M reads पुर्वकम् (11) M reads कन्दोदके. (12) पुटयेज्जारितस्तावत्, a variant in M (13) यावत् कन्दो न दह्यते, an incorrect variant in K. (14) मूखाया is the reading in K. (15) M reads सूतं. (16) K reads एवं

ततः शलाकया ग्रासान्[1] धग्निस्थो ग्रसते रसः[2] ॥ १२४ ॥
ततो रत्नानि आर्य्याणि[3] वक्ष्यमाण[4]क्रमेण तु ॥ १२५ ॥
अभ्रकं भ्रामकञ्चैव[5] शंखनाभिं[6] तथैव च ।
रसानुपरसान् दत्त्वा[7] महाजारसमन्वितान्[8] ॥ १२६ ॥
वज्रकन्दं वज्रलता[9] मेषशृङ्गमृतायसम्[10] ।
कटुतुम्बस्य बीजानि मृतलोहानि पाचयेत्[11] ॥ १२७ ॥
सर्व्वाणि समभागानि शिखिशोणितमाश्रितम्[12] ।
तावत्तं मर्दयेत् प्राज्ञो यावत् कर्म्म दृढं भवेत् ॥ १२८ ॥
मूषा वज्राकृतिश्चैव[13] कर्त्तव्या छादनैः सह ।
तन्मध्ये स्थापयेत् सूतम् अधोवातेन धामयेत्[14] ॥ १२९ ॥
आदौ तत्रैव दातव्यं[15] वज्रमौषधलेपितम्[16] ।
ग्रस्यते कोऽत्र[17] सन्देहो यथा तीव्रे हुताशने[18] ॥ १३० ॥

(1) K reads ग्रासम्. (2) This charana is wanting in M. (3) K reads नानाणि, which is gram. incorrect, the word नाना being an indeclinable. (4) K has वलमान. (5) K reads भ्रामकश्चैव. (6) M reads मुखनाभिः. (7) K has रसानुपरसा दत्त्वा. M has रसानवरसान्दत्ता. (8) K has महाजारसमन्वितम्. M has महाजारसमन्वितम्. (9) कदलमा ब्रह्म, an incomplete variant in K. (10) K reads मतायस, which seems to be an error of the scribe. (11) M reads सेचयेत्. (12) शिखिशोणितसमन्वितं, a variant in K. (13) मूषा वज्राकृतीश्चैव, a variant in K. मूषामत्स्याकृतिश्चैव, a variant in M. (14) M reads वयांवातेन धारयेत्. (15) K has आदौ तावत् प्रदातव्यं. (16) K reads लेपनं. (17) K reads नात्र. (18) यथापूर्वं हुताशनं, a variant in K.

कुलिशेन पुटे दग्धे[1] कच्छपो[2] तेन मर्दयेत् ।
यावदेकादशगुणं कुलिशं[3] जारयेत् पुनः ॥ १३१ ॥
सुदग्धशंखनाभिश्च[4] मातुलुङ्गरसप्लुतः[5] ।
मुक्ताफलं[6] ततो देयं वज्रजोर्णे तु सूतके[7] ॥ १३२ ॥
अनेन क्रमयोगेन ह्येकादशगुणं[8] भवेत् ।
केवलं शिखिपित्तञ्च[9] नीली[10]निर्य्यासमिश्रितम् ॥ १३३ ॥
नीलोत्पलानि[11] लिप्तानि प्रक्षिप्तानि तु सूतके[12] ।
रसे कल्पेमहारागान् हीनरागान् परित्यजेत्[13] ॥ १३४ ॥
रक्तानि शिखिपित्तञ्च[14] महारक्त[15]समन्वितम् ।
सद्रवं[16] लेपयेत्तेन प्रद्रवेत्[17] रसमध्यतः ॥ १३५ ॥
रजनीं चैव कुष्ठं च[18] अश्मनिर्य्यासभावितम् ।
जारणं पुष्परागस्य तेनैव सह दापयेत् ॥ १३६ ॥

---

(1) कुलसारिपुटे दग्धे, a variant in K. कुलिशनिपुटेदग्धे, a variant in M. (2) K reads कर्षांश. (3) K reads कुलीश. (4) K has नाभिश्च. M has सुदग्ध शङ्खनाभिश्च. (5) M reads रसप्लुतम्. (6) M has मुक्तापल. (7) वज्रमूर्ति मुक्तोर्णके, a variant in K. (8) K reads एकादशगुणं. (9) M reads पित्त तु. (10) K has निलि. M has नीलि. (11) K reads निलिमथानि, which is unintelligible. (12) K reads भूतले. (13) In lieu of this hemistich, K has अनेन क्रमयोगेन एकादशगुणं भवेत्. (14) K has an incomplete charana रक्ता शिखिपित्त च. (15) K reads महारत, which seems to be incorrect. (16) K has सरक्त (without any suffix.) (17) प्रक्षिपेत् is the reading in K. (18) रञ्जनी चैव कमुक्तो, a variant in M.

बहुरत्नेषु[1] जीर्णेषु भृङ्गरागेषु[2] सुव्रते ।
रसेन्द्रो दृश्यते देवि नीलपीतारुणच्छविः ॥ १३७ ॥
शुद्धानि हेमपत्राणि शतांशेन तु लेपयेत्[3] ।
पुटेन मारयेदेतदिन्द्रगोपनिभं[4] भवेत् ॥ १३८ ॥
संसर्गाद्वेधयेत्सर्व्वमिदं हेम मृतं[5] प्रिये ।
त्रिभागं सूतकेन्द्रस्य तेनैव सह सारयेत् ॥ १३९ ॥
मूषामध्यस्थिते[6] तस्मिन् पुनस्तेनैव जारयेत् ।
धूमवेधी भवेद्देवि पुनः सारितजारितः[7] ॥ १४० ॥
अनेन क्रमयोगेन यदि जीर्णा त्रिशृङ्खला[8] ।
वेधयेन्नात्र[9] सन्देहो गिरिपाताल[10]भूतलम् ॥ १४१ ॥
पार्श्वज्योतिः[11] प्रदृश्येत चोर्द्ध्वं[12] नैव तु दृश्यते ।
भूचरं तं विजानीयात् रसेन्द्रं[13] नात्र संशयः ॥ १४२ ॥
तेनाश्वाम्लगतिर्देवि[14] योजनानां शतं व्रजेत् ।
दिव्यतेजा[15] महाकायो दिव्यदृष्टि[16]र्महाबलः ॥ १४३ ॥

---

(1) K reads बज्ररत्नेषु. (2) K reads भृङ्गराजेषु. (3) शतांशेनानुलेपयेत्, an incorrect variant in K. (4) K reads नीभं, which is unusual. (5) मदं हेम त is an incomplete reading in K. (6) K has मूषामध्ये स्थिते. (7) पुनः सारितसारितः, a variant in M. (8) K reads त्रिसंकला. (9) वेधयन्नात्र is an incorrect reading in K. (10) K reads पाताल. M reads भूतलः, which is gram. inc. (11) K has an incomplete reading पा······ज्योति. (12) K reads ऊर्ध्वं. (13) M reads रसेन्द्रो, which is inc. (14) K reads गति देवि. M reads तेनाश्वागगतिर्देवि. (15) K has दिव्यतेजो. (16) K reads दिव्या दृष्टि.

सर्व्वरोगविनिर्मुक्तो जीवेदाचन्द्रतारकम्[1]।
तस्य मूत्रपुरीषं तु सर्व्वलोहानि विध्यति ॥ १४४ ॥
समजीर्णेन वज्रेण हेम्ना च सहितेन च।
अग्निस्थो जारयेल्लोहान्[2] बन्धमायाति सूतकः ॥ १४५ ॥
सारयेत्तेन वीजेन सहस्रमपि[3] वेधयेत्।
सारितं जारयेत्[4] पश्चात् लेप्यं क्षेप्यं सहस्रशः[5] ॥ १४६ ॥
सारयेत्[6] तेन वीजेन लक्षवेधमवाप्नुयात्।
अनेन क्रमयोगेन कोटिवेधी भवेद्रसः ॥ १४७ ॥
केवलं तु यदा वज्रं समजीर्णं तु जारयेत्।
बद्धः[7] सूतस्तदा ज्ञेयो निष्कम्पो निरुपद्रवः ॥ १४८ ॥[8]
अग्निस्थो जायते सूतः शलाकां[9] ग्रसते क्षणात्।
हठाग्निना धाम्यमानो[10] ग्रसते सर्व्वमादरात्[11] ॥ १४९ ॥
चरते जरते सूत[12] आयुर्द्रव्य[13]प्रदायकः।

---

(1) जीवेच्चंद्रार्कतारकं, a variant in K. (2) K reads जारयेल्लोहं. M reads जायते लोहात्. (3) समस्तमपि is the reading in K. (4) K reads जारितं. (5) लाप्ये क्षेप्य सहस्रशः, a variant in K. लेप्यं. क्षिपसहस्रतः, a variant in M [For the explanation of लेप्य and क्षेप्य vide रस.स. Chap. VIII. v. 80.] (6) K reads सासयेत्, which seems to be incorrect. M reads धारयेत्. (7) B reads बद्ध (without विसर्ग). (8) This śloka is not found in M. (9) M reads शलाका. (10) B and M have धाम्यमते. K has हठाग्निधांम्यमानेन. None appears to be gram. correct. (11) M has सर्वपारदात्. (12) जरते जरते सूत, a variant in B. रसते जारते सूते, a variant in K. (13). B. reads आयुद्रव्यः, which is incorrect.

मूषास्थं धमयेत्[1] सूतं हठाग्नौ नैव कम्पते[2] ॥ १५० ॥
जारयेत् सर्व्वरत्नानि बद्धः[3] खेचरतां[4] नयेत् ।
इति[5] लोहेऽष्टगुणिते[6] जीर्णे स्याद्रसबन्धनम् ॥ १५१ ॥
लोहानि सत्त्वं त्रिगुणं द्विगुणं[7] कनकं तथा ।
धूमावलोकवेधी[8] स्यात् भवेन्निर्वाणदो रसः[9] ॥ १५२ ॥
आदावष्टगुणं जार्य्यं व्योमसत्त्वं महारसम्[10] ।
समं हेमदशांशेन वज्ररत्नानि जारयेत् ॥ १५३ ॥
सर्व्वं[11] च जारयेद्वज्रं तदासौ[12] खेचरो रसः ।
भ्रमेत् प्रदक्षिणावर्त्तः कोटिवेधी च जायते ॥ १५४ ॥
समे तु पन्नगे जीर्णे दशवेधी भवेद्रसः ।
द्विगुणे शतवेधी स्यात् त्रिगुणे तु सहस्रकम्[13] ॥ १५५ ॥
चतुर्गुणेऽयुतं[14] देवि क्रमेणानेन[15] वर्द्धयेत् ।

---

(1) K reads धमते. M reads धामयेत्. (2) B has नैव कल्पते. M has नावकम्पते. (3) M reads बद्ध. (4) K reads खचरतां. (5) The portion commencing from इति and ending in जारयेत् (153) is not found in K, only the following portion is found after भवेद्रसः (155),—गुणोता जीर्णे स्यादसबधन लोहसत्त्व त्रिगुण त्रिगुणकनकं तथा ४९ धमलोहकवेधी स्याद्भवेन्निर्वादतो रसः । M reads इह in lieu of इति. (6) B reads गुणोता, which is inc. (7) M reads त्रिगुणं. (8) धूमलोहकवेधी is the reading in B. (9) B reads वरः. (10) Two slokas are wanting in B, beginning from this word. (11) K reads सम. (12) M reads तथासौ. (13) सहस्र च त्रिसंगुणे, a variant in B. सहस्र तु चतुर्गुणे, a variant in K. (14) K reads पञ्चगुणेऽयुतं. (15) K reads incompletely क्रमेणाने वर्धयेत्.

उत्तरोत्तरवृद्ध्या तु[1] जारयेत्[2] तत्र पन्नगम् ॥ १५६ ॥
कुटिलं पन्नगं जार्यं तत्र[3] संख्याक्रमेण तु ।
तद्वादमेति देवेशि[4] कोटिवेधी भवेद्रसः ॥ १५७ ॥
वरुणा दानवेन्द्रेण[5] भक्षितो भस्मसूतकः[6] ।
जारितं द्वादशगुणं[7] यत्र तीक्ष्णं सुरेश्वरि ॥ १५८ ॥
भक्षयित्वा[8] पलैकं तु दानवो बलदर्पितः ।
जगदुत्पाटितं[9] तेन कैलासोऽपि च चूर्णितः[10] ॥ १५९ ॥
तत्र मया क्षणं ध्यात्वा[11] दृष्ट्वा तन्मायया कृतम्[12] ।
जारितं पन्नगे सूतं[13] समांशं शिलया हृतम्[14] ॥ १६० ॥
तेन सूतेन संलिप्तं त्रिशूलं हिमशैलजे[15] ।
तेन शूलेन निहतो दानवो बलदर्पितः ॥ १६१ ॥

---

(1) M has उत्तरोत्तरवृद्धायं. (2) B reads जायते. (3) B reads जावतेऽत्र. (4) तत्वांतिमेतु देवेशि, a variant in B. दत्वा तु……देवि is an incomplete variant in K. (5) K reads दानवेनापि. M reads कुरिणा दानवेन्द्रेण. (6) K reads भक्षपूतकः, which is evidently the error of the scribe. M reads सूतकम्. (7) K has वा दशगुण. M has जारितंद्वादशगुणं. (8) M reads रचयित्वा. (9) B reads जगदुत्पाचितं. K reads जगदुत्पावित, which is not intelligible. (10) कैलासमपि चालितः, an incorrect variant in K. (11) तत्र काले मयातुत्वा, a variant in B. तद्वचिकाद्ममय, a variant in M. Both the readings are unintelligible. (12) B reads मद्दष्ट मायया कृत. K reads कृत. M reads कृत्वा दृष्टा मायया कृतम्, which mars the metre. (13) K reads पन्नगे सूतेः. M reads पन्नग सूत. (14) M reads सह. (15) B reads रसवे जले. K reads शुल्पग्रसि शैलजे. M reads रसवज्जलम्.

हेम शुल्वं[1] तथा तीक्ष्णं वाजरं च पञ्चालकम्[2] ।
रोहणं कान्तलोहं च[3] जारयेत्तत्त्वसंख्यया ॥ १६२ ॥
एकैके[4] रसराजोऽयं बद्धः[5] खेचरतां नयेत्[6] ।
गन्धनागे द्रुतं[7] देवि जारणां सुकरां शृणु[8] ॥ १६३ ॥
आदौ[9] संशोधितं सूतं रजनीचूर्णसंयुतम्[10] ।
मर्दयेद्यावदाक्रष्णं[11] क्षालयेदुष्णकाञ्जिकैः ॥ १६४ ॥
एवं मुहुर्मुहुर्घृष्टो गन्धनागो द्रुतिं चरेत्[12] ॥ १६५ ॥
नागस्य सूत्र[13] देवेशि वत्सस्य महिषस्य वा[14] ।
आवर्त्यावर्त्य भुजगं[15] सप्त वारान् निषेचयेत्[16] ॥ १६६ ॥

---

(1) B reads रांमशुल्व. K reads समशुल्व. (2) वाजरं च पटालगं, a variant in B. नारसल पञ्चालग, a variant in K. [Vide ante 7th Paṭala, v. 107.] (3) Both B and M read काञ्चिलोह च. (4) K reads एकैक (without any suffix). (5) M reads बद्ध, which is incorrect. (6) B reads नयम्, which is inc. (7) B has गधनागे द्रुतं. K has गधानागद्रुत. M has गन्धनागद्रुतं. (8) कुरुपां भण, an incorrect reading in B. कुरया शृणु, a reading in K, which has no sense. (9) M reads अथ. (10) रजनीचूर्णयुत, a variant in K. रजनीचूर्णमिश्रितम्, a variant in M. (11) B reads यावदोक्ष्ण, which seems to be the error of the scribe. (12) गधनागद्रुति चरेत्, a variant in B. गधनाग. द्रुति चरं, a variant in K. Both the texts are inc. (13) K reads सूच, which is not correct. M reads नरस्य मूत्रे. (14) M has च. (15) B reads नजग, which is incorrect. आवर्त्यावर्त्य नाग, a variant in K. (16) B reads सप्तवारं. K reads सप्तवार निमंचयेत्, wherein the last term is incorrect.

क्षत्वा[1] कण्टकवेध्यानि तस्य पत्राणि सुन्दरि।
चतुर्थांशप्रमाणेन[2] गन्धकस्य तु योजयेत्॥ १६७॥
प्रसार्य्य लाक्षापटलं[3] रोमाणि[4] तदनन्तरम्।
ऊर्द्धं गन्धकचूर्णं च[5] ततो नागदलं तथा[6]॥ १६८॥
गन्धकं नरलोमानि लाक्षाया: पटलं[7] क्रमात्।
ऊर्द्धं प्रसार्य्य संस्थाप्य[8] सूत्रवर्त्ति[9] तु कारयेत्॥ १६९॥
करञ्जतल[10]मध्ये तु दशरात्रं निधापयेत्[11]।
दीप्ताग्रभागां तां वर्त्ति[12] संडश्या तु विधारयेत्[13]॥१७०॥
तां द्रुतिं पातयेत् पात्रे सौवीरटङ्कणान्विते[14]।

(1) K reads एवं. (2) B reads चतुर्थांशप्रमाणेन. M reads चतुर्थांशि प्रमाणेन. Both are incorrect. (3) B reads लाक्षापट, which seems to be the error of the scribe. (4) B reads रोमाणि, which is inc. M reads रामाणि, which is also inc. (5) B reads गधकचूर्णं च. K reads तु. M reads ऊर्ध्वं. (6) नागादलत्तथ, an incorrect reading in B. K reads त्वया, which is inc. (7) B has लक्षाया:. M has पाटल. Both the readings are inc. (8) This charaṇa and the next are wanting in K. M reads सञ्स्थाय instead of संस्थाप्य. (9) B has सूत्रे वर्त्ति. (10) K reads कारञ्जतैल. (11) K has नियोजयेत्. M has दशरात्रेण दापयेत्. (12) B reads वा वर्त्तिं. K reads दीप्तमयगतां वर्त्तिं. M reads दीप्तो इयाया तावर्त्ति, which is unintelligible. (13) संडस्य तु विधारयेत्, a variant in B. संडस्य तु विधारयेत्, a variant in K. तस्यार्थे विविधारयेत, a variant in M. (14) मौचीरटिकान्विते, an incomplete reading in B. सौवीरचटिकान्विते, a reading in M.

काचकूप्याश्च[1] मध्ये तु तत्तैलं स्थापयेत् प्रिये[2] ॥ १७१ ॥
कृत्वा गोस्तनमूषायां[3] लिप्तायां शिलया रसम् ।
चतुःषष्ठ्यादिभागेन[4] ज्ञात्वा देवि बलाबलम् ॥ १७२ ॥
गन्धनागद्रुतिं दत्त्वा तां मूषां सुरवन्दिते[5] ।
गर्त्ते गोमयसंपूर्णे विन्यस्य पुटपाचनम् ।
दद्यात् करीषतुषयोः[6] प्रसृतिद्वितयेन च[7] ॥ १७३ ॥
दद्यादजीर्णशंकायां[8] सिद्धवज्रीरसस्य तु[9] ।
चतुर्बिन्दून् पुटे[10] प्राग्वदेवं[11] प्रतिदिनं भवेत् ॥ १७४ ॥
जारणात्रिगुणात् सूतो[12] भवेज्जम्बूफलप्रभः[13] ॥ १७५ ॥
माक्षिकं सत्त्वमल्पाल्पं मृतनागसमन्वितम् ।
मूषागतं भवेद्यावत्[14] काचं[15] दत्त्वाधरोत्तरम् ।

---

(1) Both B and K read काचकूपस्य. (2) K reads पुनः. (3) B has गोस्तनमूषायां. K has गोस्तनमूखायां. (4) B reads पातेन. (5) K reads तु मुखमुद्रिते. (6) करीषुतुषये, an incorrect reading in B. करीषतुषयोः, a reading in M, which seems to be the error of the scribe. (7) प्रसृतिर्द्वितयेन वा, a variant in K, which is gram. inc. M has प्रसृत instead of प्रसृति. (8) B reads संकायां, which is gram. incorrect. (9) K reads सौंदवज्रीरसेन तु. M reads सिद्धवज्रीरसस्य तु. (10) B and K read चतुर्बिंदुपुटे. (11) K has प्राग्दैवं, which has no sense. (12) जारणा त्रिगुणा सूता, a variant in B. जारणात्रिगुणे सूतो, a variant in M. (13) भवेजंबूफलं प्रभः, an incorrect reading in B. (14) भवेद्यास, a reading in B. भवेदयुत, a reading in K. (15) The word काच is not found in K.

एवं द्वादशवारांस्तु[1] सुधातं रञ्जितं[2] भवेत् ॥ १७६ ॥
तेन पक्वं बीजचूर्णं पारदे पादभागिकम्[3]।
मर्दितं चणकाम्लेन चणाद्गर्भद्रुतिर्भवेत्[4] ॥ १७७ ॥
गर्भद्रुतिर्न चेद्देवि[5] वर्णिकाद्वयगन्धयोः[6]।
रक्तसिन्धूद्भवालर्कं[7] टङ्कणाशुगपुङ्खतः[8]।
कल्केन लिप्तं पुटितं[9] बीजं गर्भे द्रुतं[10] भवेत् ॥ १७८ ॥
बीजे पादार्द्ध[11]तुर्यांशे जीर्णे वेधं करोति सः।
दशषोडशभागेन द्वात्रिंशांशेन[12] च क्रमात् ॥ १७९ ॥
संयोज्य त्रिगुणां रीतिं[13] तारे तारावशेषितैः[14]।

(1) K reads द्वादशवारैस्तु. M reads द्वादशवारस्तु, which is incorrect. (2) B reads रञ्जतं. K reads रञ्जनं. (3) B reads पादभागिक. M reads पारद बीजभागिकम्. (4) B has गर्भे द्रुतिर्भवेत्. K has an incomplete text—चणाद्गर्भवेत्. (5) गर्भद्रुतिर्भवेद्देवि, a variant in K, which is partly incorrect. (6) K has वानकाद्वयगंधयोः. M has वर्ण्णिकागधगन्धयोः. Both seem to be inc. (7) रक्तसिंधूभवालकं, an incorrect variant in B. सुसैंधवबालार्कं, a variant in K. रक्तसिन्धुभयालर्कं, a variant in M. (8) B reads पूङ्खतः. M reads कङ्कणाशरपुङ्खतः. (9) M has खल्लेन लिप्तं घुटित, which seems to be inc. (10) B reads गर्भद्रुतिं. K reads बीजगर्भे द्रुत. M reads बीजगर्भद्रुत. All are gram. inc. (11) B reads पादार्थ, which is not correct. (12) B reads द्वाविंशांशेन. (13) The portion beginning from this charana and ending in मनःशिला (vs. 180 & 181) is wanting in B. M reads त्रिगुण, which is gram. inc. (14) K reads तारावशेषित.

चौरमध्यस्थितं चौरं[1] कृष्णवर्णं भवेत् क्षणात् ॥ १३५ ॥
तस्य पञ्चाङ्गचूर्णेन[2] पारदं[3] सह मर्दयेत् ।
धमेच्च[4] मूकमूषायां खोटो[5] भवति तत्क्षणात् ॥ १३६ ॥
रक्ताम्बरधरो भूत्वा[6] रक्तमाल्यानुलेपनः ।
कृष्णपक्षे तु पञ्चम्यां रक्तशाल्योदनेन तु[7] ।
बलिं दत्वा महादेवि[8] रक्तचित्रकमुद्धरेत् ॥ १३७ ॥
रक्तचित्रकचूर्णेन[9] वङ्गस्तापैस्त्रिभिस्त्रिभिः[10] ।
सर्व्वदोषविनिर्मुक्तः[11] स्तम्भमायाति[12] तत्क्षणात् ॥१३८॥
तन्मूलं सूतकं चाम्ल[13] कङ्गुणीतैलसेचनात्[14] ।
एकविंशतिवारेण शुल्वं[15] शुद्धं भविष्यति ॥ १३९ ॥

---

(1) चौरमध्ये क्षिपेत् चौर, a variant in D. स्थितं is wanting in M. (2) D reads पञ्चाङ्गचूर्णं तु. (3) D reads पारदेन. (4) D reads धामयेत्. (5) M reads खोटी. (6) K reads erroneously भूक्ता. The word धरो is wanting in M. (7) D reads रक्तमाल्यो-दनेन तु, which is incorrect. M reads रक्तशल्योदनेन च, which is an error of the scribe. (8) M reads ततो देवि. (9) M reads चुर्णेन, which is incorrect. (10) K reads वंग (without any suffix), which is gram. incorrect. वंकावापैस्त्रिस्त्रिभिः, an incorrect variant in M. (11) D reads विनिर्मुक्ता. K reads विनिर्मुक्तो. M reads विदुन्मुक्तः. All the readings are incorrect. (12) M reads स्तंभमायाव. (13) K reads चाम्लं. M reads चैव. (14) D reads संयुता. M reads सेच-नम्. After this hemistich we find in D the following hemistich, which runs thus :—पत्रलेपप्रमाणेन चन्द्रार्कं काञ्चनं भवेत्. We have not adopted this, for it seems to us redundant. (15) K reads erroneously शुक्लं.

रक्तचित्रकभल्लात-तैललिप्तं पुटेन तु[1] ।
चन्द्रार्कपत्रं देवेशि जायते हेम शोभनम् ॥ १४० ॥
नागिनीकन्दसूतेन्द्रं[2] रक्तचित्रकसंयुतम्[3] ।
पत्रलेपप्रमाणेन[4] चन्द्रार्कं काञ्चनं भवेत् ॥ १४१ ॥
रक्तचित्रकसंयुक्तो रसोऽपि सर्व्वदो भवेत् ॥ १४२ ॥[5]
ज्योतिष्मतीतैलविधिं[6] वक्ष्यामि शृणु पार्व्वति ॥ १४३ ॥
ज्योतिष्मती नाम लता या च[7] काञ्चनसन्निभा ।
वल्लीवितानबहुला हेमवर्णफला शुभा ॥ १४४ ॥[8]
आषाढ़पूर्व्वपक्षे तु[9] गृहीत्वा[10] बीजमुत्तमम् ।
तिलवत् क्वाथयित्वा तु[11] हस्तैः पादैरथापि वा[12] ।
तस्य तैलं[13] समादाय कुम्भे ताम्रमये क्षिपेत्[14] ॥ १४५ ॥

---

(1) M reads भवेन तु, which has no clear sense. (2) नागनीकरसूतेन्द्र, a reading in D. नागिनिकरसूतेन्द्रं, a reading in K. नाभीनिकन्दसूतनु, a reading in M. We have adopted the above text, after collating all the texts. (3) M reads संहतम्. (4) M reads प्रतापेस्तु. (5) This hemistich is not found in M. After this we find in D चित्रककल्प: and in K कंदचित्रकल्प:. (6) M reads अथ ज्योतिश्मती-तैलं. (7) M reads यास्ति, which is not correct. (8) This hemistich is not found in M. (9) Both D and K read पूर्वपक्षस्य. (10) M reads गृहीत्वा, which is not unanimously correct. (11) D reads कल्पयित्वा तु. M reads क्वतीत्य साधयित्वा च. (12) D has हस्तोपादैरथापि वा, which is incorrect. K and M have हस्तपादैरथापि वा. (13) D and K read तस्यास्तैलं. (But the word बीजं is neuter.) (14) कुम्भे ताम्रे पयो क्षिपेत्, a variant in D, wherein the third term is incorrect.

तापयेद्भूगतं[1] कुम्भं क्रमाद्दूर्द्धं तुषाग्निना ।
षण्मासे तु व्यतिक्रान्ते[2] स घटः काञ्चनं भवेत् ॥ १४६
तं तु[3] हेममयं क्रत्वा तैलमाक्षिकमिश्रितम्[4] ।
प्रतिवापे[5] निषिञ्चेत् तत् हेम ताम्रसमं[6] भवेत् ॥ १४७
तथाच शतवेधि[7]स्यात्—विद्यारत्न[8]मनुत्तमम् ॥ १४८ ॥
दग्धारोहां[9] प्रवक्ष्यामि रसबन्धकरीं प्रिये[10] ।
स्पर्शवेधे तु[11] सा ज्ञेया सर्व्वकार्य्यार्थसाधिनी ॥ १४९ ॥
शस्त्रच्छिन्ना[12] महादेवि दग्धा वा पावकेन तु[13] ।
प्ररोहति यथाद्दिव्या[14] दग्धा च्छिन्ना महौषधी[15] ॥१५०॥

---

(1) D reads भूमितं. M reads स्थापयेत्. (2) षण्मासं तु व्यतिक्रम्य, a variant in D. षण्मासे त्वभ्यतिक्रान्ते, a variant in M. (3) D reads तच्छुलं, which has no sense. K reads तास्रं. (4) तैन मक्षिकमिश्रितम्, a variant in D. K reads तैन instead of तैल. (5) This hemistich and the next one are not found in D. M reads प्रतिवाप. (6) K reads हैमं ताम्रमयं. (7) K has यथातश्शतवेधी. M has तया च शत-वेधी. (8) M reads विद्यरत्न, which seems to be incorrect. (9) D and K read दग्धलोहं, which appears to be incorrect. M reads दग्धा-रोहं, which is also incorrect; since we see just afterwards तस्याः पुष्पं &c. (10) रसबन्धकरा भवेत्, a variant in D. रसबन्धकरी भवेत्, a variant in K. (11) Both D and K read स्पर्शवेधेषु. (12) D reads शास्त्रच्छिन्ना, which is incorrect. (13) D reads erroneously दग्धा चापचकेन तु. (14) प्ररोहन्ति यथाहैवि, a variant in D, wherein the first word is incorrect. प्ररोहेत् तत्यथा दिव्या, a variant in K, wherein the second word is incorrect. (15) K reads erroneously मौषधी. M reads दग्धा सा तु महौषधी.

रक्तं पीतं सितं कृष्णं[1] तस्या: पुष्पं प्रजायते ।
चणकस्येव पत्राणि सुप्रसूतानि लक्षयेत्[2] ॥ १५१ ॥
सा स्थिता गोमतीतीरे[3] गङ्गायामर्बुदे[4] गिरौ ।
उज्जयिन्या[5] दक्षिणतो वनान्तेषु च दृश्यते[6] ॥ १५२ ॥
तस्या: कन्दरसं[7] दिव्यं कृष्णराजि[8]समन्वितम् ।
ताम्बूलेन[9] समं कृत्वा गुटिकां[10] कारयेद्बुध: ॥ १५३ ॥
सर्व्वेषामेव लोहानां[11] द्रुतानां वह्निमध्यत:[12] ।
सहस्रं वेधयित्वा तु काञ्चनं कुरुते क्षणात् ॥ १५४ ॥
तथैव म्रियते सूत:[13] कान्तहेमाभ्रसंयुत: ।
कुरुते काञ्चनं दिव्यं देवाभरणभूषणम् ॥ १५५ ॥[14]

---

(1) श्वेतं पीतं सितं कृष्णं, a variant in D. श्वेतं पीत सितं कृष्णं, a variant in K. (2) D reads भवयत्. M reads सुप्रभूतानि. (3) सास्तौ-गतामनरे तीरे, an absurd variant in D. K reads गौतमीतीरे. M reads सा स्थिता. (4) D has गङ्गायाशाश्रयं. M has गङ्गायमर्बुदे. Both the texts seem to be incorrect. (5) K reads उज्जयिन्यां. (6) वनं तेषु च दृश्यते, a variant in D वनां तेषु न दृश्यते, a variant in K. Both the readings seem to be incorrect. (7) D reads कान्तरसं, which has no clear sense. K and M read तस्य, which is gram. inc. (8) D reads कृष्णरक्त. K reads कृष्णराजि. (9) D has तव कृष्णेन. (10) M reads घटिकां, which is evidently incorrect. (11) D reads सर्वेषामपि वस्तूनां. (12) D has वह्निमूतानां मध्यत:. दग्धानां वह्निमध्यं, an absurd variant in K. (13) D reads सूतं and reads its adjective संयुतं. But M reads सूतं and reads its adjective संयुत:, which is gram. incorrect. (14) This hemistich is wanting in D and M.

कटुतुम्बीति विख्यातां[1] देवि दिव्यौषधीं शृणु[2] ॥१५६॥
तस्या वीजानि[3] संगृह्य सूक्ष्मचूर्णानि कारयेत्[4] ॥ १५७ ॥
एकविंशतिवारांस्तु[5] भाव्यं धात्रीरसेन तु ।
पयसा सहितेनैव विश्वभेषजसंयुतम् ॥ १५८ ॥
वीजं यन्त्रे विनिक्षिप्य तैलं संगृह्य पण्डितः ।[6]
रसं मूर्च्छापयेत्तेन[7] चक्रमर्द्दन मर्द्दयेत्[8] ॥ १५९ ॥
गोपित्तं शिखिपित्तञ्च काङ्कोकाशीससंयुतम्[9] ।
तारतुल्यानि चैतानि सर्व्वेषां सूतकः समः[10] ॥ १६० ॥
मेषशृङ्गे निधातव्यं[11] मासमेकं[12] निरन्तरम् ।

---

(1) D and M read कटुतुम्बी तु विख्यातः. (2) देवि दिव्यौषधी शृणु, a variant in D and M. K reads दिव्यौषधं and at the same time reads its adjective विख्यातां, which is gram inc. (3) D reads तस्य वीजानि. M reads तस्य वजानि. Both are incorrect. (4) D has an incomplete charana सूक्ष्मचूर्णं कारयेत्. M reads धारयेत्, which seems to be incorrect. (5) All the texts read वारानि. But the term वार is a masculine. It means otherwise, when it is a neuter. (6) This hemistich is not found in D and K. (7) M reads मूर्च्छापयेत्तेन, which is gram. incorrect. (8) This hemistich is not found in D. K has an incomplete charana चक्रमर्द्दन्. M reads चक्रमर्द्दय. (9) This hemistich is not found in D. कांकोकाशीसकैर्युतं, a variant in K. कांर काशीसस ुतम्, a variant in M. (10) M reads सूतकक्षमः, which seems to be incorrect. (11) मेषशृ ेण धातव्य, a variant in D. मेषशिङ्गण धातव्या, an incorrect variant in M. (12) D reads यामकैकं. K reads यासमेकं, which is incorrect.

लोहदण्डेन संसिक्तं[1] सर्व्वलोहानि वेधयेत् ॥ १६१ ॥
गन्धकं लोहदण्डेन एकविंशतिभावितम् ।
युक्तं[2] लोहमनेनैव[3] जम्बीर[4]रससंयुतम् ।
सबीजं सूतकोपेतम्[5] अन्धमूषा[6]निवेशितम् ।
भूगतं मासमेकन्तु[7] तारं काञ्चनतां नयेत् ॥ १६२ ॥
दलस्य भागमेकं तु[8] तारपञ्चकमेव च[9] ।
शुल्वस्य पञ्चभागञ्च[10] बीजस्यैकञ्च योजयेत् ॥ १६३ ॥
एते द्वादश भागाः स्युः सर्व्वं[11] तद्धारयेत् क्षितौ ।
स्थानस्यास्य निषेकं तु[12] भूदण्डेन तु[13] कारयेत् ॥१६४॥
पञ्चविंशद्दिनं स्तु तु[14] जायते कनकं समम्[15] ॥ १६५ ॥
चोरकन्दविधिं वक्ष्ये सर्व्वसिद्धिकरं परम् ।
चतुर्वर्णविधं[16] तत्र रक्तकन्दः[17] प्रशस्यते ॥ १६६ ॥

---

(1) M reads संयुक्तं. (2) This term is wanting in D. K reads युक्तं. (3) D reads लोहामनेनैव. M reads लोहमचनेन. (4) K reads जम्भीर, which is also correct. (5) सबीजमृतकाप्तं, a variant in K. M reads मृतकोपेत, which is incorrect. (6) K reads अंधमूखा (मूखा = मूषा). (7) D has मासमेकं तु. (8) D reads दलस्य, which is incorrect. M reads च in lieu of तु. (9) तारं पञ्चममेव च, a variant in D. (10) D reads पञ्चभागन्तु. (11) D reads erroneously सर्वं. (12) K has तालस्यास्य निषेकं तु. (13) तु is wanting in D. M reads सुदण्डेन. (14) पञ्चविंशद्दिनं स्तु, a variant in M. (15) M reads कनकं समः. (16) D and K read चतुर्वर्णं विधं. (17) M reads रक्तकन्दं, which is incorrect.

भस्मीतच्छ्वेत् क्षीरं[1] रक्तवर्णं सुशोभनम् ॥ १६७ ॥
मेघानां[2] तु निनादेन सञ्जातैरूपशोभितैः[3] ।
पत्रैः कुह्वोसमैः स्निग्धैः[4] सप्तभिर्हेमसुप्रभैः[5] ।
बन्धनं[6] रसराजस्य सर्व्वसत्त्ववशंकरम्[7] ॥ १६८ ॥
तस्य क्षीरन्तु संगृह्य तारं निर्वापयेद्बुधः ।[8]
धमेद्ववाग्निना[9] चैव जायते हेम शोभनम् ॥ १६९ ॥
तिन्तिणीपत्रनिर्यासे[10] रौप्यताम्र[11]रजोयुतम् ।
मर्द्दयेत् पारदं प्राज्ञो रसबन्धो भविष्यति ॥ १७० ॥
तोयमध्ये विनिक्षिप्य[12] गुटिका[13] वज्रवद्भवेत् ॥ १७१ ॥
शाकद्रवस्य देवेशि[14] निष्पीड्य रसमुत्तमम् ।
रक्तचन्दनसंयुक्तं सर्व्वलोहानि जारयेत्[15] ॥ १७२ ॥
गन्धपाषाणगन्धेन आयसे विनियोजयेत्[16] ।

---

(1) भग्रमीरक्तवर्णेर, a variant in D. भग्रयेतच्छ्वेत् क्षीरं, a variant in K, which is partly incorrect. (2) M reads मेखानां, which is the error of the scribe. (3) संजात रूपशोभितम्. an incorrect variant in M. (4) पत्रैः कुहिं सस्निग्धे, an incorrect variant in D. M reads कुहिसमैः. (5) D has हिमसुप्रभैः. M has हैमसप्रिभैः. (6) D reads वेधनं. (7) सर्वसत्वसंकरी, an incorrect va iant in D. सर्वशक्तिवशङ्करी, a variant in M. (8) This hemistich and the next three are not found in D. (9) M reads धमेत्तागाग्निना. (10) M reads निर्यास. (11) K reads भौमताम्र, which is incorrect. (12) D reads विनिक्षिप्तं, which is not correct. (13) M reads गुलिका. (14) D has कलद्रवस्य. M has शकद्रवस्य देवेशी, which is not correct. (15) M reads रञ्जयेत्. (16) M reads विनिवेशयेत्.

मिलन्ति[1] सर्वलोहानि द्रवन्ति सलिलं यथा ॥ १७३ ॥
गन्धकं रसकं ताप्यं पारदं रक्तचन्दनम् ।
कदल्या रससंयुक्तं[2] तारमायाति काञ्चनम्[3] ॥ १७४ ॥
शाकवृक्षस्य निर्यासं पत्रे तस्य च गालयेत्[4] ।
शिग्रुमूलस्य चूर्णं तु तद्रसेन विमर्दयेत् ॥ १७५ ॥
प्रलिप्य शुल्वपत्राणि पुटे क्षिप्त्वा विपाचयेत् ।
तद्धृतं[5] काञ्चनं दिव्यं भवेल्लक्षणसंयुतम्[6] ॥ १७६ ॥
फलानि शाकवृक्षस्य[7] परिपक्वानि संग्रहेत्[8] ।
तद्रसेन युतं[9] प्राज्ञः सप्तरात्रन्तु भावयेत् ॥ १७७ ॥
तद्रसेन समायुक्तं मञ्जिष्ठामिश्रितं[10] तथा ।
लेपयेत्तारपत्राणि जातं भवति काञ्चनम् ॥ १७८ ॥
देवदाल्या महौषध्या[11] विधिं वक्ष्यामि तत्परम्[12] ।
सा श्वेता व्याधिनाशे च[13] कृष्णा पीता रसायने ॥ १७९ ॥

---

(1) D reads शीलित. (2) M has मद संयुक्त. (3) स-लंकाणि ज्ञारयेत्; a variant in M. (4) पत्रे तस्या च गालये, an incorrect variant in D. यत्नतः परिगालयेत्, a variant in K. This hemistich and the next one are wanting in M. (5) D reads उद्यत K reads उद्दत [correct form is उद्धृत.] (6) भवे तल्लक्षणसंयुत, a variant in K, which is partly incorrect. (7) M reads शक्रवृक्षस्य, which seems to be incorrect. (8) D reads पक्वानि च संग्रहेत्, which is incomplete. M reads संवहेत्. (9) M reads द्रुतं. (10) D reads erroneously मजिष्टाश्रितः. M reads मञ्जिष्ठामिलितं. (11) D has देवदाल्यमहौषध्यो. M has देवताल्या महौषध्या. Both are incorrect. (12) D reads वदामि M reads तत्वतः (= तत्त्वतः). (13) M reads वायुशमने.

पौर्णमास्यां[1] त्रयोदश्यां राहुग्रस्ते दिवाकरे ।
अथवा[2] कृष्णपञ्चम्यामिमां विधिवदुद्धरेत् ॥ १८० ॥
देवदालीफलं[3] देवि विष्णुक्रान्ता च सूतकम् ।
मूर्च्छयेद्वन्धयेत् क्षिप्रं शुल्वं हेम करोति च ॥ १८१ ॥
देवदालीफलं मूल-मीश्वरीरस एव च ।[4]
तोयेन मर्दितं कृत्वा[5] वक्त्रं स्तम्भयति[6] क्षणात् ॥ १८२ ॥
अतः परं प्रवक्ष्यामि[7] श्वेतगुञ्जाविधिं प्रिये ॥ १८३ ॥
कृष्णपक्षे चतुर्द्दश्यामष्टम्यां वा[8] सुराचिते ।
कपाले मृत्तिकां न्यस्य सेचयेत् सलिलेन तु ॥ १८४ ॥
बीजानि सितगुञ्जाया[9] पुष्पयोगेन वापयेत्[10] ।
वक्ष्यमाणेन मन्त्रेण कुर्य्यात् संग्रहणं[11] तथा ॥ १८५ ॥
ॐ नमो भगवति श्वेतवल्लि[12] श्वेतपर्व्वतवासिनि[13] सर्व्वकार्य्याणि कुरु कुरु अपराजिते[14] नमो नमः स्वाहा ॥

---

(1) K reads पौर्णिमास्यां (2) D reads erroneously अथा. (3) K has देवदलीफलं. M has देवनालीफल Both are incorrect. (4) This hemistich is not found in M. (5) K reads मर्द्दन कृत्वा. M reads चक्र, which is incorrect. (6) D reads भाष्यं स्तम्भयते. M reads वंक्तं. (7) अथातः संप्रवक्ष्यामि, a variant in K. (8) D and M have च, which is not proper. (9) D has शितगुञ्जाया, which seems to be incorrect. (10) पुष्पसंयोगे तु वापयेत, a variant in D. K reads पुष्पसंयोगे तु. (11) M reads erroneously मग्रन्त तथा. (12) D and K read भगवती श्वेतवल्ली. (13) D has श्वेतपर्व्वते वासिनि. (14) K reads प्रतिहते, which appears to be an error of the scribe.

अनेन मनुना प्रोक्ता सिद्धिर्भवति नान्यथा।
पञ्चमासेन तथा वह्नौ मन्त्रपूतेन रञ्जयेत्॥ १८६ ॥[1]
शुद्धशुल्वं[2] तु संगृह्य मूषामध्ये तु संस्थितम्[3]।
त्रिपञ्चपलसंख्यं तु[4] कर्षार्द्धसितगुञ्जया[5]॥ १८७ ॥
सङ्केतव भवेत्सारं[6] तस्य गन्धविवर्जितम्।
ब्रह्मरीति[7]समायुक्तं गुञ्जाचूर्णं सङ्केततः।
देवानां भूषणं देवि जायते हेम शोभनम्[8]॥ १८८ ॥

॥ इत्यौषधिक्रिया ॥[9]

चन्द्रोदकेन[10] देवेशि वक्ष्यामि[11] रसबन्धनम्॥ १८९ ॥
शुक्लपक्षे पूर्णमास्यां दृष्ट्वा[12] पूर्णेन्दुमण्डलम्।

---

(1) This śloka is not found in D and M. (2) K reads शुद्ध' शुल्वं M reads शुद्धशुल्कं, which is incorrect. (3) K reads मूषामध्ये, [which = मूषामध्ये.] D reads संस्थिताम, which is g am inc. (4) त्रिपञ्च-पलसंख्यता, a variant in D. त्रिपंचपलसंख्य' तु, a variant in K. त्रिपञ्च-पलसंख्यतु, a variant in M. We have adopted the above reading after collating all the texts. (5) D has कर्षार्द्ध सितगुञ्जया, K has कर्षार्द्ध सितगुञ्जया. M has कर्षार्द्ध' सितगुञ्जय, which is incomplete. (6) M reads भवेत्सार'. (7) D reads ब्रह्मराति, which is evidently an error of the scribe. K reads ब्रह्मरीती. (8) M reads भूषणं, which creates a tautology. (9) This is not found in D and M. (10) After गुञ्जाविधि we find in M कर्णरोरसबन्धन, but in D and K चन्द्रोदकविधि. Hence we place the latter first. (11) D reads जायते. (12) D reads दृष्टा. K reads दृष्टा. Both are incorrect.

निर्गच्छन्ति मही भित्त्वा चन्द्र[1]तोयान्यनेकधा ॥ १८० ॥
कानिचिन्मृन्निवर्णानि[2] रसेन लवणानि तु[3] ।
कानिचिच्चन्द्रतुल्यानि व्योमभासानि[4] कानिचित् ।
चन्द्रहृदाभिवर्द्धेरन्[5] क्षोयेरन् तत्क्षयेण तु[6] ॥ १८१ ॥
दृष्ट्वा[7] चन्द्रोदकं मन्त्री[8] पौर्णमास्यां विशेषतः[9] ।
निर्गच्छति[10] महीं भित्त्वा चन्द्रहृदा विवर्द्धते ॥१८२॥[11]
चेत्रमध्यं पुरा[12] कृत्वा देवमभ्यर्च्य[13] शङ्करम् ।
चतुर्दश्यां च[14] तत्रैव पूजयित्वा[15] विचक्षणः ।
अहोरात्रोषितो भूत्वा बलिं तत्र निवेदयेत् ॥ १८३ ॥

---

(1) D reads erroneously चन्द्री. (2) D has कानिचिन्मृत्तिकावर्णानि, which mars the metre. K has कानिचिन्मृन्वर्णानि. which is not proper here. (3) D reads च. (4) D reads व्योमभःकानि, which is unintelligible. (5) चन्द्रहृदाभिहन्ति, a variant in D. K reads चन्द्रहृदाभिवर्द्धेत्. Both the readings are incorrect. (6) D has क्षीःतेताम् चर्येन तु, wherein the second term is incorrect. K reads क्षीयते. The above-mentioned ślokas commencing from चन्द्रोदकेन देवेशि &c. and ending in तत्क्षयेण तु are not found in M. (7) D reads दृष्टा. K reads इष्टा. None of them is correct. (8) K has मनि, which is incorrect. (9) K reads पौर्णिमास्यां. M reads प्रयत्नतः. After this we find in D the following hemistich—यद्दर्श तस्य कर्तव्यं पौर्णमास्यां प्रयत्नतः, which we have rejected. (10) D reads निगच्छत्. M reads निर्गयति. None is correct. (11) This hemistich is not found in K. (12) M reads तदा. (13) D reads देवमभ्यं च. M has देवमभ्य यत्नतः, an incomplete charana. (14) M reads तु. (15) We find in M a redundant letter च after पूजयित्वा.

पूर्णमास्यां[1] च रात्रौ च गत्वा तस्य समीपतः[2] ।
चन्द्रोदकं तु संग्राह्य[3] मन्त्रयुक्तं सुमन्त्रितम्[4] ।
आलोड्य मधुसर्पिर्भ्यां पिबेत्तत्तु[5] समाहितः ॥ १८४ ॥
पीतमात्रेण तेनैव मूर्च्छा भवति तत्क्षणात्[6] ।
चन्द्रोदये ततो दृष्टे[7] क्षीरं तस्य तु दापयेत् ।
सप्तरात्रप्रयोगेण[8] चन्द्रवन्निर्मलो[9] भवेत् ॥ १८५ ॥
एकविंशतिरात्रेण[10] जीवेद्[11]ब्रह्मदिनत्रयम् ।
एकमास[12]प्रयोगेण ब्रह्मायुः स भवेन्नरः[13] ॥ १८६ ॥
चन्द्रोदकेन गगनं रसं हेम च[14] मर्द्दयेत् ।
मूषा[15]मध्यगतं ध्मातं तत्क्षणाद्गुटिका भवेत् ॥ १८७ ॥

---

(1) M reads पौर्णमास्यां. (2) गत्वा तु तत्समीपतः, a variant in K. (3) D reads संग्राह्यं. (4) K reads समन्वितं. (5) D reads पिबेत्तं तु. M reads पिबेत्तत्. Both are gram. incorrect. (6) सूत बध्नाति तत्क्षणात्, a variant in D. (7) चन्द्रोदयेन ते दृष्टे, a variant in D. M reads ततस्तिष्ठेत्, which is gram. inc. (8) M reads अर्धमासे प्रयोगेण. (9) M reads निर्मल भवेत्, which is not gram. correct. (10) प्राक्विंशतिरात्रेण, a variant in D, which has no clear sense. एकविंशतिरात्रेण, a variant in K. (11) K reads जपेद्, which is inaccurate here. (12) D reads षड्मास. (13) ब्रह्मायुर्जायते नरः, a variant in D, wherein the first term is incorrect. K reads ब्रह्मायुर्जीवते नरः, wherein the middle term is gram. incorrect. (14) Both D and K read हेमं च ; [but the word is usually spelt as हेमन्.] (15) K reads मूखा (=मूषा).

अयं च[1] अग्रमात्रेण लोहान्यष्टौ[2]च वेधयेत् ॥ १९८ ॥

तद्रसेन[3] रसं भाव्यं वच्चेण समजारितम् ।

चतुःषष्टांशतः पिण्डे[4] द्विगुणे तु[5] सहस्रकम् ॥ १९९ ॥

दशसंकलिका[6]बद्धं गुञ्जामात्रं रसं नरः[7] ।

त्रिलोहवेष्टितं वक्त्रे धृत्वा चादृश्यतां व्रजेत्[8] ॥ २०० ॥

ॐ नमो रुद्राय दंष्ट्रोत्कटाय[9] विघ्ननाशाय[10] दिशां रक्ष रक्ष विदिशां रक्ष रक्ष रुद्रो विज्ञापयति[11] हुं फट् स्वाहा ॥

॥ इति दिग्बन्धनमन्त्रः[12] ॥

ॐ नमो भगवते रुद्राय त्रिशूलहस्ताय[13] अमृतोद्भवाय[14] रक्ष रक्ष हुं फट् स्वाहा ॥

॥ इति पानमन्त्रः[15] ॥

अथातः संप्रवक्ष्यामि कर्त्तरीरसबन्धनम्[16] ॥ २०१ ॥

---

(1) M reads अयं तु. [Here अयं refers to रसः] (2) M reads लोहानष्टौ. (3) D reads तद्रसे तु. M reads तत्र सत्, which is incorrect. (4) चतुःषष्टांशतो पिण्डे, an incorrect variant in D and M. K reads पिंड. (5) D reads द्विगुणं तु. (6) M has दशशङ्कलिखा, which is incorrect. (7) D reads रसे ततः. K reads रसेन तु. M reads न संशयः. (8) K has चादृश्यतां. M has व्रजेत्, which is gram. incorrect. (9) M reads दंष्ट्रत्कटाय, which is incorrect. (10) M reads विघ्नात्मनाय, which is gram. incorrect. (11) M has ज्ञापयति. (12) M reads दिग्बन्धमन्त्रः. (13) M reads शूलहस्ताय. (14) K reads अमृतोद्भव. (15) M reads परममन्त्रः. This पानमन्त्र is not found in D. (16) B reads कर्त्तरिरसबंधनं. कर्त्तारसस्य बन्धनम्, a variant in D, which is incorrect; since it states afterwards कर्त्तरीरस.

असुराणां समायोगे क्रोधाविष्टेन चेतसा ।
सुदर्शनं महाचक्रं[1] प्रेरितं सुरवैरिणा[2] ॥ २०२ ॥
भालपट्टात्ततस्तस्य[3] निपेतु:[4] स्वेदबिन्दव: ।
ते भूमौ पतिता दिव्या:[5] सञ्जाता: कर्त्तरीरस:[6] ॥ २०३ ॥
रक्षार्थं स्थापितं तत्र[7] विष्णुना च सुदर्शनम् ।
चक्रतुल्यं भ्रमत्येत[8]दायुधानि निकृन्तति[9] ॥ २०४ ॥
कुरुते गर्जितं[10] नादं धूमं ज्वालां[11] विमुञ्चति ।
कर्त्तरी दृष्टिमात्रेण[12] तथान्या[13] शब्दकर्त्तरी ॥ २०५ ॥
सा स्पर्शकर्त्तरी छाया[14]कर्त्तरी धूमकर्त्तरी ।

---

(1) सुदर्शनमहाचक्र, a variant in M. (2) D reads सुरवैरिणम्, which is incorrect. B and K read सुरवैरिणा, which is also incorrect. (3) भालपट्टततस्य, a variant in B, which is partly incorrect. तत्ताल-पट्टे ते तस्य, a variant in D, which conveys no idea at all. भालपट्टतस्तस्य, an incomplete charana in K. (4) M reads निर्याता:. (5) D and K read जाता:. (6) B has संजात कर्त्तरिरस:, which is incorrect. संजातात् कर्त्तरीरस:, a variant in D, wherein the first term is incorrect. कर्त्तरीरस-बन्धनम्, a variant in K. (7) D reads तस्य. (8) B, D and K read भ्रमत्येव. (9) तदा तुल्यं भित्वा तति, an incorrect variant in D. K has सर्व्वयुद्धनिकृन्तनम्. (10) B and K read गर्जनं. D reads erroneously गर्जन्न:. (11) B reads धमे ज्वाला, which is incorrect. D reads धूमवालां, which is incorrect. M reads महाज्वालां. (12) B reads कर्त्तरि, which is incorrect. K reads दृष्टीमात्रेण, which is incorrect. M reads दृष्टमात्रेण. (13) M reads तथान्य, which seems to be incorrect. (14) This charaṇa and the next one are not found in D. K reads स्राया, which appears to be incorrect.

सा[1]ज्वालाकर्त्तरी चैव शक्तिर्घोरस्य[2] कर्त्तरी ॥ २०६ ॥
लोकानां तु हितार्थाय घोरशक्तिर्व्यवस्थिता[3] ।
रसरूपा महाघोरा असिद्धानां तु छेदिनी[4] ॥ २०७ ॥
तस्याः चैवं यदा गच्छेत्[5] अघोरास्त्रं जपेत्तदा[6] ।
पुनर्घोरं[7] न्यसेत्तत्र अथास्त्रं विन्यसेद्बुधः[8] ॥ २०८ ॥
अनुलोमविलोमेन देहेऽधिष्ठाप्य[9] कर्त्तरीम् ।
मुद्रया मुद्रयेत्तां तु[10] अघोरास्त्रेण योजिताम्[11] ॥ २०९ ॥
दीपेनाराधयेत्तां तु[12] स्तम्भयेद्धूपनेन च[13] ।

---

(1) D reads स. (2) B reads सत्त्वघोरस्तु, which is incorrect. D and M read शक्तिघोरस्य, which seems to be incorrect. (3) B reads घोरे शक्तिः. D reads घोरशक्ति (without विसर्ग). Both are incorrect. (4) D reads छेदनी. (5) B reads तस्य चैवं, which is incorrect. तस्य सैवं यथा गच्छेत्, a variant in M, which is partly incorrect. (6) दशरावं तदा जपेत्, a variant in D. अघोरास्त्रं तदा जपेत्, a variant in K. M reads जपेत्तथा, which is partly incorrect. (7) D reads पुनर्घोरां. (8) यथास्त्र विन्यसेद्बुधः, a variant in D, which is partly incorrect. (9) देहे त्वाधिष्ठाप, an incorrect reading in D (10) D has मुद्रय मुद्रयेतेन, which has no sense. K has मुद्रया मुद्रयेन्तं तु, which is partly correct. (11) M reads योजितः. (12) B reads चितेन, which is incorrect. दीपेन राधयेत्तं तु, a variant in D. M reads दीपेन. (13) D and K read तु instead of च. B reads स्तम्भं दीपनेन तु. M reads संभवंद्दीपनेन च. We suppose that, धूपनेन is the proper word here, for in worshipping a deity दीप and धूप are necessary.

विष्टरा[1]मुद्रया तां तु स्थानयोगं नियोजयेत्[2] ॥ २१० ॥

कञ्चुकी तु शिला क्रान्ता[3] कुमारी वज्रकन्दकम्[4] ।

योषिद्रक्तं गवां मूत्रं[5] तिलकः सर्व्ववश्यकृत्[6] ॥ २११ ॥

अथातः संप्रवक्ष्यामि विषोद[7]रसबन्धनम् ॥ २१२ ॥

विषोदकं विषसमं घृतवच्च घृतोदकम्[8] ।

सितपीतादिवर्णाढ्यं[9] तच्च देवि रसोत्तमम् ॥ २१३ ॥

तत्र गत्वा वनोद्देशे[10] स्मरेद्घोरसहस्रकम्[11] ।

केशाः क्षिप्ताः स्फुटन्त्यस्मिन्[12]आत्म[13]च्छाया न दृश्यते॥२१४॥

---

(1) B reads विष्ठुरा. K reads विष्टया. M reads विपुरा. (2) स्थानयोगेन योजयेत्, a variant in D. K has an incomplete charana स्था योजयेत. (3) B reads कुंचुके, which is incorrect. M reads तुन्दिना क्रान्ता. (4) D reads कचकन्दकम्. (5) योषिद्रक्तं तु गोरक्त, a variant in B. योषिद्रक्तचन्द्रोदकं, a variant in M. (6) In B we have this absurd reading—मर्दन संवधये देवो देहलोहचैवोद्गतो रसबंधनं. Here ends the 12th Paṭala of the MS. B. व्याख्या स्याद्रसबन्धकम्, a variant in M. (7) D reads विषोकदस्य बन्धनम्, which seems to be incorrect. K reads विषोदकरसबन्धनम्, wherein क is redundant. (8) This hemistich is not found in M. (9) मौसयान्तादिवर्णैस्तं, an incorrect variant in D. K reads वर्णांपि, which is incorrect. (10) D reads तवो देशं. K reads वनोदेश, which is incorrect. M reads भवेद्दशे, which is also incorrect. (11) कार सोत सहस्रकं, a variant in D. सरेद्दोरं सहस्रकं, an incorrect variant in K. (12) D reads केशाः क्षिप्र. K reads कोशाः क्षिप्ता स्फुटत्यस्मि, which is incorrect. M reads कोशक्षिप्ताक् स्फटंतेस्मिन्, which is also incorrect. (13) M reads मात्र.

तैलञ्च गोलकाकारं[1] घृतञ्चैव विसर्पति ।
गन्धकस्य हरेद्गन्धं[2] लवणाम्लञ्च जायते[3] ॥ २१५ ॥
आम्ला पालाशपत्रेण[4] कटुकालावुके[5] क्षिपेत् ।
विषोदकं गन्धकं च हरवीजञ्च तत्समम् ॥ २१६ ॥
अजाक्षीरेण पिष्ट्वा तु[6] शुल्वपत्राणि[7] लेपयेत् ।
तत् पुटेन च[8] देवेशि सिन्दूरारुणसन्निभम् ।
शतांशेनैव देवेशि[9] सर्व्वलोहानि वेधयेत्[10] ॥ २१७ ॥
अनेन विधिना देवि नागः[11] सिन्दूरतां व्रजेत्[12] ।
सहस्रांशेन तस्यैवं[13] तारं वेधं प्रदापयेत्[14] ॥ २१८ ॥

(1) D has गोपालकाकार, which is absurd. M has गोलकार, which is incorrect. (2) D reads हरेदु ध, which is an error of the scribe. (3) लवणाम्ल जायते, an incomplete variant in D. लवण...मलायते, an incomplete variant in K. लवण कलिलायते, a variant in M. [लवणा + अम्लञ्च, लवणा = लवणं.] (4) माल्वा पाटलाशपत्रेण, a variant in D, which is not intelligible. तत् शाल्वा फलमात्रेण, a variant in M. (5) D reads कटुकालांचक, which seems to be incorrect. K reads कटुकालांवुके. (6) अजाक्षीरे गारुण्यान्तु, a variant in D, which is unintelligible. M reads अजक्षीरेण. (7) D reads पात्राणि, which is incorrect. (8) D reads तत् पुटेनाद्य. K reads तत् पुटेनैव. (9) शतेन वै शिवे सर्वं, a variant in D. M reads शतांशेन तु. (10) लोहानि वेधयेद्ध्रुवम्, a variant in D. (11) M reads नागं. (12) K reads सिधूरतां. M reads व्रजेत्. Both are incorrect. (13) M reads तस्यैव. (14) तारवेधं प्रजापयेत्, an incorrect variant in D. K reads तारे. M reads तारवेध.

रक्तं पीतं[1] तथा कृष्णमुत्तरोत्तरकार्य्यकृत् ॥ २१८ ॥
त्रिपलं कान्तपात्रे वा[2] पात्रेऽलावुमयेऽपि वा[3] ।
गृहीत्वा पूर्व्ववत् पत्रैः[4] पालाशैर्वेष्टयेद्बहिः[5] ॥ २२० ॥
स्थापयेद्धान्यराशौ तु[6] दिवसानेकविंशतिम्[7] ।
मक्षिषी[8]क्षीरमध्ये तु बिन्दुमेकन्तु साधयेत्[9] ॥ २२१ ॥
पायसं भक्षयेद्यस्तु[10] मध्वाज्येन तु संयुतम्[11] ।
यावच्चूर्णपलं[12] देवि जीवेत्तद्बिन्दुसंख्यया[13] ॥ २२२ ॥
लाङ्गलो गृहधूमश्च[14] सिन्दूरं[15] रजनीद्वयम् ।

---

(1) M reads रक्तपित्त, which is absurd. (2) D and K read त्रिफला. M reads कान्तपात्रेण. (3) पात्रे ताम्रमये तथा, a variant in D. K reads erroneously यत्रोलांवुमये तथा. (4) D reads मन्त्रैः. M reads पात्रे, which is incorrect. (5) पलाशै हृष्टयेद्बहिः, an incorrect variant in D. M reads फलांग्रैरथ वेष्टयेत्, which has no clear sense. (6) M reads धान्यमध्ये तु. (7) दिवसान्येकविंशतिः, an incorrect variant in K. M reads विंशति, which is incorrect. (8) D reads सुद्दी. (9) D reads पाचयेत्. (10) भक्षयेद्यस्तु स पयः, a variant in M. (11) पयसा न समायुतम्, a variant in D. यवे...यान्यसंयुत, an incomplete reading in K. (12) D reads यावच्चूर्णं पल, which is not correct. (13) यावद्विन्दोश्च संख्यया, a variant in D. यावत्विदसंखाया, a variant in K. which is unintelligible. जीवन्स्तत्विन्दुसंखाया, a variant in M, which is partly correct. (14) D and M read गृहधूमश्च, which is not correct. (15) K reads सिंधूरं.

मेषशृङ्गीं च शृङ्गीं च[1] कृष्णोन्मत्तं च मारकम्[2] ।
सबीजं[3] सूतकञ्चैव विषतोयेन मर्द्दितम्[4] ।
विषतोयेन मेधावी[5] सप्तवारांश्च[6] भावयेत् ॥ २२३ ॥
अथवा भावयेत् तत्तु[7] यावच्चूर्णं तु तद्भवेत् ।
तेन नागं प्रतीवाप्य[8] षोड़शांशेन[9] संभवेत् ॥ २२४ ॥
मूषाख्ये वेणुयन्त्रे च[10] त्रिवारमपि[11] भावयेत् ।
धूमं परिहरेत्तस्य यक्ष्म्याधिकरं परम् ॥ २२५ ॥
स्थापयेन्नागसिन्दूरं[12] पात्रेऽलावुमये ततः[13] ।

---

(1) मेषशृङ्गे च शृङ्ग च, a variant in D. मेषशृङ्गं च शृङ्गीं च, a variant in K. मेषशृङ्गिश्च शृङ्गिश्च, a variant in M. (2) K has an incomplete charaṇa —कृष्णो च...च मारकम्. M has कृष्णोन्मत्ताय मारकम्. (3) D reads सुबीजं. (4) विषतोये विमर्द्दित, a variant in D. M reads मर्द्दयेत्. (5) K reads erroneously मेधा. M also reads incorrectly मेधावि. (6) All the texts read सप्तवाराणि, which is gram. inc. (7) D and M read तं तु, which is not correct. (8) तेन वा प्रतिवाक्य, an incorrect and incomplete charana in D. K and M read प्रतिवाप्य which destroys the metre. (9) K has षोडशांशे...संभवेत्, which is both incorrect and incomplete. (10) सूतं विमर्द्य मन्त्राणि, a variant in D. मूषाख्यं वेणु...व, an incomplete variant in K. मूषाख्ये वेणयन्त्या च, an incorrect variant in M. (11) D reads चारं तु, which is an error of the scribe. K has त्रिणि वाराणि. M has त्रीणि वाराणि. Both are incorrect. (12) K reads भागसिन्दूरं. M has an incomplete charaṇa स्थापयेत्... (13) पात्रे मांवुपनिषु च, a variant in D. पात्रेलावुमनिषु च, a variant in K. M has an incomplete charana —मवमये ततः.

तच्चूर्णं तु शतांशेन तारताम्राणि वेधयेत् ॥ २२६ ॥
विषपानीयमादाय[1] यवागौ[2] वर्त्तितं शुभम् ।
निषिक्तं[3] तच्च वर्त्तेऽयं[4] तारं भवति शोभनम् ॥ २२७ ॥
विषपानीयमादाय प्रक्षिपेच्च रसोत्तमे ।
कुनटी-गन्धपाषाण-विषटङ्कण-लाङ्गलि[5] ।
नष्टपिष्टीकृतं खल्ले[6] तारपत्राणि लेपयेत् ।
अन्धमूषा[7]गतं ध्मातं निर्बीजं[8] कनकं भवेत् ॥ २२८ ॥
॥ ॐ श्रीनीलकण्ठाय ठठः[9] ॥ अस्यायुतं जपेत्[10] ॥

॥ इति विषोदकग्रहणमन्त्रः[11] ॥

[विषहरणविधिं वक्ष्ये समाहितमनाः शृणु ॥ २२९ ॥[12]

---

(1) This hemistich and the next five are not found in M. (2) D reads यावागौ. K reads यवगौ. [यवागौ should be यवाग्वाम्.] (3) D reads भिषिक्तं. K reads निश्रिक्तं. Both are incorrect. (4) D reads वर्त्तोऽयं. K reads वर्त्तोयं. (5) M reads लाङ्गली. (6) D reads नष्टपिष्टकृतं खल्वे. (7) M reads अन्धमूषा, which is incorrect. (8) D reads नजीवं, which is not correct. (9) D has ॐ नीलकंठाय ठठः. M has ॐ नं ह्रीं नीलकण्ठाय ठठः. (10) D has अस्य प्रयुतं जपेत्. K has अस्यायुतं जपतः. M has अस्य मन्त्रस्यायुतं जपं, which is incorrect. (11) विषोदकग्रहणनृमन्त्र, a variant in D. अयं विषोदक...हणमन्त्रः, a variant in K. इदं विषग्रहणमन्त्रम्, a variant in M. (12) This विषहरणविधि is not found in M. [It seems to be an interpolation; since it is not proper to resume औषधिक्रिया in the section of उदकक्रिया.]

गन्धमाचीकदरटं[1] कुनख्या[2] रससंयुतम् ।
विषल्टण[3]समायुक्तं मातुलुङ्गाम्ल[4]मर्द्दितम् ॥ २३० ॥
एतत् कल्कं पलमात्रं[5] चौषध्या लेपनं कुरु ।
निर्यासे[6] तु पुटं कुर्यात्त्रिवारं हेम शोभनम्[7]॥ २३१ ॥][8]
सञ्जीवनी[9]जलस्याथ विधिं वक्ष्यामि पार्वति ॥ २३२ ॥
शुक्रेणाराधितो देवि प्रागहं[10] सुरवन्दिते ।
दानवानां हितार्थाय मृतानां देवसङ्गरे ॥ २३३ ॥
मया संजीवनी विद्या[11] दत्ता चोदकरूपिणी[12] ।
तया संजीविता दैत्या[13] ये मृता देवसङ्गरे[14] ॥ २३४ ॥

(1) गन्धमाचित्रदरटं, a variant in D, wherein the middle term is incorrect. (2) D reads कुमधा. K reads कुनधा, Both of these texts are incorrect. (3) D reads विषत्रय. (4) K reads मातुलिंगाम्ल. (5) D reads कल्कतल्लेमात्र. K reads एतत्कल्कं र. . मात्र. which is incomplete. (6) K reads निर्जने. (7) D reads हेमशोधनम्. (8) This विषल्टणविधि ought to have been placed after श्वेतगुञ्जाविधि, i.e. after the śloka 188. But as all the texts except M placed it here, we are compelled to follow them only putting it within brackets. (9) D reads erroneously संचिनी. M reads संज्ञीविनी. After the end of this विधि and before the commencement of उष्णोदकविधि we find in K—संजीवनजल-कल्प: and not संजीवनीजलविधि:. (10) D reads योगेहं. (11) मायासंजीविनीं विद्यां, a variant in D. M reads सञ्जीविनी. (12) D reads चोदकतर्पणी. K reads चोदाररूपिणी. M reads बोधकरूपिणी (13) तया संजीविनी दैत्या, an incorrect variant in D. तथा सञ्जीता दैत्या, an incorrect variant in M. (14) M reads देवसङ्गमे, which seems to be incorrect

निच्चिप्ता मर्त्त्यलोके सा[1] सम्यक् ते[2] कथयाम्यहम् ॥२३५॥
अस्ति मर्त्त्ये महापुण्या[3] पवित्रा दक्षिणापथे[4] ।
नदी गोदावरी नाम प्रसिद्धा जाह्नवी यथा[5] ॥ २३६ ॥
दक्षिणे च तटे[6] तस्याः कदलीनगरं परम्[7] ।
तस्य दक्षिणतः शैलः सर्व्वलोकेषु विश्रुतः ॥ २३७ ॥
नाम्ना कृष्णगिरिश्चेति[8] दृश्यते सर्व्वमङ्गले[9] ।
सुप्रसिद्धाम्बिका नाम ग्राम[10]स्तस्यास्ति सन्निधौ ॥ २३८ ॥
तत्राप्युदक[11]मालोक्य परीक्षेत[12] सुरार्च्चिते ॥ २३९ ॥
गृहीत्वा शुष्कवंशं तु[13] क्षिपेत्तोयस्य मध्यतः ।
जायते हरितं स्निग्ध[14]मह्नोरात्रेण निश्चितम्[15] ।

---

(1) निर्ज्जित्वा मर्त्यलोके सा, a variant in D, which is incorrect. (2) D reads मध्यक्ता, which is incorrect. (3) D has an incorrect reading—माहपुण्या. (4) D reads दक्षिणामथे, which is incorrect. (5) D has यथा, which is not correct. (6) M reads तथा. (7) कदलीवनशंकरम्, a variant in D. K reads वरं. M reads उत्पन्नीभमरं परम्. (8) D has कृष्ण गौरीश्चेति, which is incorrect. (9) D reads सर्वमङ्गलम्. K reads सर्वमंगलः. (10) This word is wanting in D. (11) D reads तत्राप्युदक, which is not accurate. (12) M has an incomplete reading—परीत. (13) M reads शुष्कवस्त्रम्, which is not appropriate here. M reads ग्रहीत्वा, which is not universally correct. (14) K reads हरितस्निग्धः. (15) मह्नोरात्रौसिश्चित, an incorrect variant in D. K reads निचित. The term is सिक्तं and not निश्चित, though the latter is proper here

मुष्कत्यङ्कुरपत्राणि[1] दृश्यते तन्मनोहरम्[2] ॥ २४० ॥
बलिपुष्पोपहारेण[3] ततो देवीं[4] समर्चयेत् ।
क्षेत्राधिपं गणेशञ्च चण्डयोगीश्वरं तथा[5] ॥ २४१ ॥
तस्य मन्त्रं प्रवक्ष्यामि त्रिषु लोकेषु दुर्लभम् ॥ २४२ ॥[6]
॥ ॐ चण्डाय[7] पिनाकिने शूलहस्ताय ॐ दिशां बन्धय[8]
विदिशां बन्धय ठठः ॥
तिलांश्च तण्डुलांश्चैव[9] मन्त्रेणानेन सर्षपान् ।
सप्ताभिमन्त्रितान्[10]कृत्वा साधको दिक्षु निक्षिपेत्[11]॥२४३॥
कटुकालाबुके तोयं[12] कृतरक्षं समाहितः[13] ।

(1) भवसंकरपत्राणि, a variant in D, which has no clear sense. भवंत्यंकुरपत्राणि, a variant in K. (2) D and K read सुमनोहरम्. (3) D reads पूजोपहारेण. K reads पुष्पोपहारेण. (4) D has देवं, whereas all other texts have देवीं. (5) चन्द्र योगीश्वरौ तथा, a variant in D. चंडो योगीगणैस्तथा, a variant in K. Both are incorrect. चण्ड-योगिगणैः सह, a variant in M. (6) This hemistich is not found in D and M. (7) D reads चन्द्राय. M reads चन्द्र, which is incorrect. (8) D and K read बंधर, which is not correct. The remaining portion is not found in M. (9) M reads तण्डुलान् च. (10) All the texts read अभिमंत्रितं; but as the nouns (तिल, तण्डुल & सर्षप) are all in masculine gender, we ought to have the adjective अभिमन्त्रि-तान्. (11) K reads निःक्षिपेत्. M reads विक्षिपेत्. (12) कटु-कालाम्बुतोये, a variant in D. कटुकित्सावुकोयं, a variant in M. The sense of these texts is not clear. (13) D has कृतरक्षासमाहितः. K has कृत्वाचः सुसमाहितः. M has कृतराक्षसमाहितम्. All the texts seem to be incorrect.

गृहीत्वा तत्प्रयत्नेन[1] निजस्थानं समाश्रयेत् ॥ २४४ ॥

॥ ॐ नमोऽमृतेऽमृतरूपिणि[2] अमृतं मे[3] कुरु कुरु एवं रुद्र आज्ञापयति[4] स्वाहा ॥

सप्ताभिमन्त्रितं कृत्वा मन्त्रेणानेन तज्जलम्[5] ।
दिनमेकं तथा सूतं स्वर्णमाषद्वयान्वितम्[6] ।
मर्द्दयेत्तेन तोयेन पिबेत्तत्तु[7] विचक्षणः ॥ २४५ ॥
एकविंशतिरात्रेण[8] क्षीराहारोऽथ यत्नतः[9] ।
जीवेत् कल्पायुतं साग्रं[10] कामरूपो महाबलः ॥ २४६ ॥
योजनानां[11] शतं गत्वा पुनरेव[12] निवर्त्तते ।
अवध्यः सर्व्वभूतानां स्वेच्छाचारः[13] स खेचरः ॥ २४७ ॥
कनकं पारदं व्योम सममेकत्र योजयेत् ।
मर्द्दयेत्तेन तोयेन सप्तवारं तु स्वेदयेत्[14] ॥ २४८ ॥

---

(1) संगत्वा तत् प्रयत्नेन, a variant in D. M reads गृहीत्वा. (2) D reads रूपिणी, which is gram. incorrect. K reads तर्पिणि. M has नमो-मृतबिन्दुरूपिणी, which is incorrect. (3) मे is not found in D. M reads चामृतं. (4) D reads incorrectly रुद्रास्त्वामापयति. M reads रुद्रो ज्ञापयति. (5) D reads मज्जलम्, which is an error of the scribe. (6) स्वर्णं यावद्वयान्वितम्, a variant in D, wherein the second term is incorrect. K reads स्वर्णं माषद्वयान्वितं. (7) D reads तं तु. K reads पविबं तु, which seems to be incorrect. (8) M reads रात्रे तु. (9) D has क्षीरहारो प्रयत्नतः. K has क्षीराहारो प्रयत्नतः. Both are partly incorrect. (10) M reads सौम्यं. (11) M reads योजनानि. (12) D reads पुनरेवं. (13) K reads erroneously स्वोचारी. M reads स्वेच्छा-चारः. (14) सप्ताहं स्वेदयेत्ततः, a variant in M

स रसः सर्व्वलोहानि षष्ट्यंशेन तु वेधयेत्[1] ॥ २४९ ॥
अथवा तं रसं दिव्यं मधुना सह भक्षयेत्[2] ।
मासमात्रप्रयोगेण[3] जीवेद्ब्रह्मदिनायुतम्[4] ॥ २५० ॥
तस्य मूत्रमलस्वेदैः[5] शुल्वं भवति काञ्चनम् ॥ २५१ ॥
निर्वाते[6] तोयमादाय अञ्जलि[7]त्रितयं पिबेत् ।
पीतमात्रे भवेन्मूर्च्छा स्वास्थ्यं स्यात् प्रहरत्रयात्[8] ॥ २५२ ॥
एकविंशद्दिनान्येवं[9] क्षीराहारो भवेत्ततः ।
अष्टवर्षाकृतिः प्राज्ञः[10] कामरूपो महाबलः ॥ २५३ ॥[11]
पश्येच्छिद्रां महीं सर्व्वां[12] सप्त[13]पातालसंयुताम् ।
अवध्यो देवदैत्यानां[14] कल्पायुश्च प्रजायते ॥ २५४ ॥

(1) षष्टांशेन सुवेधयेत्, an incorrect reading in D. (2) M has this hemistich in an irregular manner—तं रसं दिव्यं मधुना समभेकत्र योजयेत्, repeating the second charana of the 248th. śloka. (3) M reads मासमाप्यपयोगेन, which is incorrect. (4) K reads ब्रह्मदिनायुषं. M reads erroneously ब्रह्मवादिना. (5) K has तस्य मूत्रमलैः स्वेदैः. M has श्वेतैः, which is incorrect. (6) K has only निवा. (7) K reads अंजलौ, which is incorrect. (8) स्वमध्य स्यात् प्रहरत्रये, an incorrect reading in D. श्वास स्यात् प्रहरत्रयम्, a variant in M, wherein the first term is incorrect. (9) D reads erroneously एकविंशादिनान्येदं. (10) D reads वाल्गो instead of प्राज्ञः. M reads वाष्ट instead of अष्ट. (11) After this śloka, we find in D only the 247th śloka repeated. Hence we have not adopted it. (12) K has an incomplete charana पश्यं ...द्रा महि मर्वां. (13) K reads सर्वं instead of सप्त. (14) D has देवदैत्यानां, which is not correct. M has देवतैश्चापि.

अथवोदक[1]मादाय पारदञ्च[2] मनःशिलाम् ।
मर्द्दयेत् खल्लपाषाणे[3] नष्टपिष्टं भवेत्ततः ॥ २५५ ॥
स्वेदयेत् सप्तरात्रं तु त्रिलोहेन च वेष्टयेत् ॥ २५६ ॥
अन्तर्द्धानं क्षणाद्गच्छेत् विद्याधरपतिर्भवेत्[4] ।
सिद्धकन्याशतहृतो[5] यावत् कल्पान् चतुर्द्दश[6] ॥ २५७ ॥
दिनेषु तेषु सर्व्वेषु दद्याच्छाल्योदनं घृतम् ।
पयसा च समायुक्तं नित्यमेवं तु[7] कारयेत् ॥ २५८ ॥
उष्णोदकविधिं वक्ष्ये समाहितमनाः शृणु ।
पश्येदुष्णोदकं[8] यत्र वासं तत्रैव कारयेत् ॥ २५९ ॥
अस्ति गोदावरी नाम महाराष्ट्रे[9]ऽतिविश्रुता ।
तस्या उत्तरभागे तु सह्याद्रिः पुण्यपर्व्वतः[10] ॥ २६० ॥

---

(1) D reads अथ चोदक. (2) D reads मारीचं तु. (3) The word खल्ल is not found in D. All other texts read खल्व. (4) विद्याधर्यातिर्भवेत्, a variant in D. विद्याधारपतिर्भवेत्, a variant in K. (5) D reads प्राप्तहृतो. (6) D and K read कल्पचतुर्दश. (7) M reads सम्यमेवन्तु. After this charana we find the following three hemistichs in K only, which we have not adopted on account of their erroneousness and redundancy. They are as follow:—ते सर्वे पुरुषास्तस्य दर्शनाय गविचिताः । ताः कनाय मत दद्युः सिद्धकामो भवेन्नरः । वलीपलितनिर्मुक्तो जीवेच्चंद्रार्कतारक । इति विषोदकसंजीवनजलकल्पः । (8) M has भवत्युष्णोदकं. (9) D reads महाराष्ट्रे. This hemistich and the following seven ones are not found in M. (10) D has सह्याद्री पुण्यपर्वतः, wherein the first word is incorrect. K has सह्याद्रिः पुण्यपावनः, wherein also the first word is incorrect.

तत्र मातापुरं[1] नाम प्रसिद्धं देवताष्टकम् ।
तस्मादुत्तरतो देवि कम्याख्यं नगरं[2] परम् ॥ २६१ ॥
तत्र कम्पेश्वरो देव[3]स्तत्रास्त्युष्णोदकं[4] ध्रुवम् ।
प्रणीताख्या[5] नदी तत्र स्नात्वा वै साधकोत्तमः ।
पश्चादुष्णोदके कुण्डे विधिं कुर्याद्यथोदितः[6] ॥ २६२ ॥
शर्व्वरीमुषितस्तत्र[7] धनवांश्च[8] दिने दिने ।
भक्षयेन्मासमात्रं तु जीवेद्वर्षशताष्टकम्[9] ॥ २६३ ॥
वर्षमेकं प्रयुञ्जीत[10] जीवेद्वर्षायुतं सुखी[11] ।
वलीपलितनिर्मुक्तो भोगी चैव पुरन्दरः[12] ॥ २६४ ॥

---

(1) D reads मात्रापुरी. (2) D reads नागरं, which seems to be incorrect. (3) Both D and K read देवो, which is gram. inc. (4) तत्रास्त्युष्णोदकं is the reading in D. (5) D reads प्रोणीताख्या, which seems to be incorrect. (6) D reads यथेरित·. (7) मर्वरीमूषिते सत्र, a variant in D. शर्वरीभूषिता तत्र, a variant in K. सर्वरीमुषितां तत्र, a variant in M. None of the readings is perfectly correct. (8) D reads धनं कांश्चित्. K reads स्वणकांश्च. Both are inc. M leaves a blank space here. (9) M reads वर्षसमाष्टकम्, which seems to be an error of the scribe. (10) K reads only प्रयु' and omits ञ्जीत. (11) This charana and the next three are not found in M. (12) भात्री च सम्भवेत्ततः, a variant in D. After this we have एकगुणेन सूतेन &c., (9th śloka), which occurs in the beginning of the fourteenth Paṭala. Hence the MS. D is wanting the remaining portion of this twelfth Paṭala and the whole of the thirteenth Paṭala, as well as the first eight ślokas of the fourteenth Paṭala.

वर्षमेकं पिबेत्तोयं[1] जीवेच्चन्द्रार्कतारकम् ।
तस्य मूत्रपुरीषेण[2] शुल्वं भवति काञ्चनम् ॥ २६५ ॥
उष्णोदकञ्च कासीसं[3] गन्धपाषाणसंयुतम् ।
चतुर्थांशेन रसकं दशभागं विनिक्षिपेत्[4] ॥ २६६ ॥
शुल्वञ्च मर्द्दयेत् सर्व्वं नष्टपिष्टं क्षणेन तु[5] ।
तेन लेपितमात्रेण शुल्वं भवति काञ्चनम् ॥ २६७ ॥
निषिक्तं तेन तोयेन प्रतिवापं ददेद्बुधः[6] ।
शुल्वञ्च जायते हेम तरुणादित्यवर्चसम्[7] ॥ २६८ ॥
तज्जलेन निषिक्तञ्च हेम वीजार्थसंयुतम् ।[8]
तारं चानेन मार्गेण[9] निषिक्तं हेमतां व्रजेत्[10] ॥ २६९ ॥
उष्णोदकेन भल्लातं तिलपिष्टं[11] च भक्षयेत् ।
मासद्वयप्रयोगेण[12] जीवेद्वर्षशतत्रयम् ॥ २७० ॥
रसगन्धाभ्ररसकं[13] तुल्यं[14] दरदमाक्षिकम्[15] ।

---

(1) This charana is not found in M. (2) M reads मूत्रपुरीषाभ्यां. (3) K reads काशीस. (4) K reads विनिःक्षिपेत्. (5) K reads चर्णेण तु. (6) ददेत् is an ungrammatical term. दद्यात् is the proper one. (7) ततक्षणान्नित्यशोभन, a variant in M. (8) This hemistich is not found in M. (9) K reads erroneously माणंगं. (10) M reads व्रजेत्, which is incorrect. (11) K reads तिलमुष्टिं. (12) M has मासद्वयपर्यामर्जात्, which is incorrect. (13) रसकन्धामरसकं, a variant in M. (14) K reads तुल्य. (15) K reads माक्षिया, which is incorrect.

याम[1]मुष्णाम्भसा घृष्टं तारपत्राणि लेपयेत् ॥ २७१ ॥
द्विवारं तु धमेद्देवि[2] स्याच्चतुर्द्दशवर्णकम् ।
क्रमेणानेन देवेशि शुल्वं षोड़शवर्णकम् ॥ २७२ ॥
एकैकं हेमताराभ्यां द्वन्द्वं[3] कान्ताभ्रयोः पृथक् ।
उष्णोदकेन संमर्द्य[4] धमनात् खोटतां व्रजेत्[5] ॥ २७३ ॥
तन्मुखे धारयेन्मासं[6] वज्रकायो भवेन्नरः ।
तच्चूर्णं यवमात्रं तु[7] भक्षयेन्मधुसर्पिषा[8] ।
यावत् पलं तस्य मलैः[9] शुल्वं भवति काञ्चनम् ॥ २७४ ॥
उष्णोदपाचितान् खादेत्[10] कुलत्थान् चीरपो[11] भवेत् ।
स्नानमुष्णाम्भसा कुर्य्यात् वर्षाद्दर्षशतायुषम्[12] ॥ २७५ ॥
चीरमुष्णोदकं क्वाथं[13] त्रिफलायाश्च पाचयेत्[14] ।

---

(1) M reads धाम, which seems to be incorrect. (2) M has विश्राम्य तु भवेद्देवि. (3) K reads द्वयं. (4) M reads संमर्यात्. (5) B (which resumes from this verse) reads नयेत्. K reads खोड़कां, which is incorrect. M reads घोटतां नयेत्, which is partly correct. (6) B reads erroneously तन्मुखधारयेन्मास. (7) K has पंचमात्रं तु. M has तत्र instead of तच्चूर्णं. (8) M reads मधुना सह. (9) K reads यात्पलं तस्य मलैः, which is incomplete. M reads यावत् फलं तस्य फलैः. (10) उष्णोदकपचिता भूर्जं, a variant in B, which has no clear sense. उष्णोदयोचितान् is the reading in K, which is partly incorrect. M reads उष्णोदपाचितान्, which is incorrect. (11) B and K read चीरचो, which is an error of the scribe. K reads कुलत्थां, which is incorrect. M reads कुलुत्थान्. (12) K reads शतायुषो. (13) चीरमुष्णोदकक्वाथं, an incorrect variant in M. (14) K reads पाचनं.

पायसं कांस्यपात्रे तन्मासमेकन्तु भक्षयेत्[1] ।
भुक्त्वा जीवेत् शतकल्पं[2] वैष्णवायु[3]र्भवेन्नरः ॥ २७६ ॥
अतः परं प्रवक्ष्यामि शैलोदकविधिं प्रिये ।
कर्दमापो महीशैलं[4] शिलश्चेति[5] चतुर्विधम् ॥ २७७ ॥
कानिचित् क्षणवेधीनि दिनवेधीनि कानिचित् ।
पक्षमासादिषण्मास[6]-वेधनानि[7] महीतले ॥ २७८ ॥
क्षिप्तं यदा[8] भवेत् काष्ठं शैलीभूतं च[9] दृश्यते ।
वह्निरन्तश्च देवेशि[10] वेधकं तत् प्रकीर्त्तितम् ॥ २७९ ॥
हिङ्गुलं हरितालञ्च गन्धकञ्च मनःशिला ।
एषां गन्धापहारं यत्[11] कुरुते तच्च वेधकम्[12] ॥ २८० ॥
गन्धकं तालकञ्चैव तोयपूर्णे घटे क्षिपेत् ।[13]

---

(1) मासमात्रं तु is the reading in K. मासं भुक्त्वा महायुषः is the reading in M. (2) B has जीवेद्वर्षशत कल्प. This charana and the next one are not found in M. (3) B reads विष्णुरायु, which is incorrect. K reads विष्टवायु, which is also incorrect. After this śloka we find in K only—इति उष्णोदककल्पः । अथ शैलोदककल्पः । (4) B reads महाशैलं. K reads दर्कमा...महिशैलः, which is incomplete. M reads कच्छमापो महीशैलं. It is called afterwards भूशैल. (see verse 286). (5) B and K read शीलश्चेति. (6) पक्षमासाद्विषण्मासा, a variant in K. (7) K reads वेधकानि. (8) K reads क्षिप्र , which is incorrect. M reads यथा, which is also incorrect. (9) K reads तु. (10) M reads erroneously देवेशी. (11) K reads तु. (12) B reads कुरुते च वेधक, which is incomplete. K reads क्षिप्रकम्. M reads erroneously तत्र वेधश्च वेधकम. (13) This śloka (281) is not found in M.

यदा तद्बुद्बुदाकारं[1] तदा शैलोदकं भवेत् ।
अन्यथा वेष्टकं[2] देवि तदग्राह्यं निरर्थकम् ॥ २८१ ॥
श्रीशैले श्रीवनप्रान्ते[3] पर्य्यङ्काख्ये[4] शिलातले ।
तत्रस्थं क्षणवेधि[5] स्यात् नदीभगवतीतटे[6] ।
एकाहे वेधकं तत्र[7] गोकर्णे तु दिनत्रयम् ॥ २८२ ॥
भद्राङ्गे[8] दिनवेधि स्यात् त्रिस्थलान्ते त्रिवासरम् ।
धारेश्वरे[9] पाक्षिकं स्यात् वर्षापुर्य्यां[10] दिनैकतः ॥ २८३ ॥
ब्रह्मेश्वरे मासिकं स्यात् व्याघ्रपुर्य्यान्तु[11] वासरम् ।
अघोरेशे मासिकं तु[12] सिंहद्वीपे[13] तथा पुनः ।
दिनमेकं ब्रह्मगिरौ विन्ध्ये तु क्षणवेधकम् ॥ २८४ ॥
वासरं माल्यवन्तेषु[14] क्षणवेधि शिलोदकम्[15] ॥ २८५ ॥

---

(1) यदा तद्ददाकार, an incomplete variant in B. (2) M reads वेष्टन. (वेष्टक = निर्य्यास). (3) B reads श्रीवने प्रान्ते. M reads श्रीशैल. (4) M reads पर्य्यङ्काख्य. (5) All the texts read क्षणवेधी, which is grammatically incorrect. (6) B reads नद्यां भवतीतटे, which is incomplete. K reads नद्यां भगवतीतटे, which is incorrect. M reads चद्या भगवतीतटे, wherein the first term is unintelligible. (7) K reads एकाहं वेधयेत्तत. (8) K reads तत्रस्थं. M reads चन्द्राङ्गे. (9) M reads तारेश्वरे. (10) B reads पार्श्वहर्म्यां. This charana and the next one are not found in M. (11) B reads व्याघ्रपूय, which is incorrect. (12) अघोरेशे तु मासिकं, a variant in M. (13) B reads सिद्धद्वीपे. (14) वासर...ल्यकर्णे च, an incomplete variant in K. M reads माल्यवन्ते तु. (15) B and M read क्षणवेधी तु तत्र च. K reads लक्षवेधी शिलोदकं, wherein the first term is incorrect.

किष्किन्ध्या[1]पर्व्वते रम्ये पम्पातीरे तृणोदकम्[2] ।
तस्य पश्चिमतो देवि योजनद्वितये पुनः ।
भूशैलमस्ति तत्रैव त्रिदिनं वेधि पर्व्वते[3] ॥ २८६ ॥
सह्याचले पुरे देव्याः चोरचेतस्य सन्निधौ ।
शैलोदकं कोटिवेधि दुर्जदेशेऽपि वासरम् ।
लक्षवेधि नृसिंहस्य नगरे गोकुलाभिधे ॥ २८७ ॥[4]
अन्यत्र यत्र तत्रापि ब्रह्मविष्णुशिवोद्भवम् ।
अमृतं तच्च तत्रापि वश्यीकरणमुत्तमम् ॥ २८८ ॥
तस्योत्पत्तिं प्रवक्ष्यामि यथा जानन्ति साधकाः ॥ २८९ ॥
मही समुद्धृतवतो वराहस्य कलेवरात् ।
यः स्वेदः पतितस्तस्माज्जातं शैलोदकं परम् ॥ २९० ॥
तन्मुखे क्षणिकं जातं क्रोड़देशे[5] तु वासरम् ।
बाहुभ्यां त्र्यहवेधि[6] स्यात् मासवेधि तु पार्श्वयोः[7] ।
षण्मासमपराङ्गे च[8] सर्व्वं समफलं भवेत्[9] ॥ २९१ ॥

---

(1) B reads किष्किध. K reads किष्किंध्रे. (2) B and K read चणोदक. (3) B has वेध पार्वति, which seems to be incorrect (4) The portion commencing from सह्याचले and ending in गोकुलाभिधे is found only in MS. K. (5) B reads कंवदेशे ( probably कम्बुदेशे ). This charana is not found in M. (6) B and M read त्रय, which seems to be incorrect. (7) K reads स्वपंयो. M reads माससंकल्. (8) B has an incomplete charana षण्मासमपराङ्गे च. (9) M reads समफलञ्च तत्.

अघोरास्त्रेण तत्रैव[1]रक्षां कृत्वा दिशां बलिम्[2] ।
दत्वा लक्षं जपित्वा तु[3] गृह्णीयादमृतं परम् ॥ २८२ ॥
शरद्ग्रीष्मवसन्तेषु हेमन्ते वा सुरार्चिते[4] ।
आयसे ताम्रपात्रे वा[5] पात्रेऽलाबुमयेऽथवा[6] ।
शैलाम्बुपलमष्टौ तु[7] पलं क्षीरस्य निक्षिपेत् ॥ २८३ ॥
क्षीरावशेषं संक्वाथ्य[8] त्रिसप्ताहं पिबेन्नरः[9] ।
जीवेद्वर्षसहस्रं तु[10] बलीपलितवर्जितः ॥ २८४ ॥
अथवाष्टपलं[11] क्षीरं पलैकेनाम्बुना युतम्[12] ।
क्षीरावशेषं सेवेत[13] पूर्वोक्तं लभते[14] फलम् ॥ २८५ ॥
कुलत्थाष्टगुणं[15] वारि पचेदष्टावशेषितम् ।
चतुर्गुणेन तेनाज्यं[16] पाचयेद्घृतशेषितम्[17] ॥ २८६ ॥

---

(1) अघोरास्त्रेण तत्रैव, a variant in K. (2) K has कृत्वा दिवलिं, which is incomplete. (3) K reads जपं कृत्वा. This charana is not found in M. (4) M has सुरार्चितम्, which is incorrect. (5) आयस्ते ताम्रपात्रे व, an incorrect reading in M. (6) B reads erroneously पात्रे कलांबुमयेथवा. K reads ततैलांबुमयेथवा, which seems to be incorrect. (7) शैलोदक पलमष्टौ, a variant in K. (8) K reads संक्वाथ्यं. कृत्वावशेषं ततृक्वाथ, a variant in M. (9) M reads भवेन्नरः, which is incorrect. (10) M reads वर्षसहस्राणि. (11) B and M read अथवाष्टफलं, which is incorrect. (12) All the texts read पलैकेनाम्बुमिश्रितम्, which is not gram. correct. (13) B reads erroneously सेवेत्रि. (14) M reads फलते, which is incorrect. (15) K reads कुलस्याष्टगुणं, which is incorrect. (16) K reads erroneously तानाज्यं. (17) पाचयेच्च पुनर्घृत, a variant in K.

लिह्याग्मधुसमोपेतं[1] विसमाहं वृहस्पतिः[2] ।
मासेन शास्त्रसम्पत्तिं[3] ज्ञात्वा देवि बलाबलम्[4] ।
हिरण्यवर्णकाकारः[5] सहस्रायुर्न संशयः[6] ॥ २९७ ॥
भवशिष्टकुलत्थं तु[7] पादांशं मधुसर्पिषा[8] ।
भक्षयेद्वर्षमेकन्तु[9] मासेनायुतजीवितः[10] ॥ २९८ ॥
तत्तिलतैलेनाभ्यङ्गं मर्दनञ्चापि कारयेत्[11] ।
मासमेकं ततो मर्त्यं[12] देहसिद्धिं करोति च ॥ २९९ ॥
पामाविचर्चिकादद्रु[13]कुष्ठानि सहसा जयेत्[14] ।
वलीपलितनिर्मुक्तः सहस्रायुश्च जायते[15] ॥ ३०० ॥

---

(1) B has लिह्यन्मधुसमोपेतं. K has लिह्याग्मधुसमपीतं. M has लिह्याग्मायु-समोपेतं. None of the readings is perfectly correct. (2) M reads विसमाहमहर्षिः. (3) B has समेन सर्वसम्पत्तिः, wherein the first term is incorrect. We do not find this charana and the next in M. (4) सत्वदेवी बलं बलं, a variant in B, which seems to be incorrect. (5) K reads हिरण्यावर्णकाकारः. M reads हिरण्यवर्णकाकारं, which is incorrect. (6) K has संसायुम संशयः, which is incorrect. (7) K reads कुलत्थं, which is incorrect. (8) K has पादांशमधुसर्पिषां. M has पादांशमधु-सर्पिषा. (9) B and K read कर्षमेकन्तु. (10) मासेनायुतजीवति, an incorrect variant in B. मासेनायुतजीविनः, a variant in K, wherein the last term is incorrect. (11) सर्वदेहेषु कारयेत्, a variant in B. K reads भवणं [perhaps मर्दनं] चैव कारयेत्. (12) B and K read मर्त्यो, which is gram. inc. This charana and the next one are not found in M. (13) M reads दन्त instead of दद्रु, which is incorrect. (14) B reads erroneously सह योजयेत्. (15) K reads सहस्रायुः प्रजायते.

यः पिबेत् प्रातरुत्थाय शीताम्बुचुलुक[1]त्रयम् ।
षण्मासात् स्यात्[2] सहस्रायुर्वलीपलितवर्जितः[3] ॥ ३०१ ॥
अथवा सूतकं देवि वारिणा सह मर्द्दयेत् ।
मासेनैकेन देवेशि नष्टपिष्टं भविष्यति ॥ ३०२ ॥
मासमात्रं समश्नीयात्[4] स भवेदजरामरः[5] ॥ ३०३ ॥
अथवा तं रसं हेम्ना[6] हेमभस्म ततो बली[7] ।
मर्द्दयेत्तेन तोयेन धामयेत् खदिराग्निना ॥ ३०४ ॥
गुटिका सुन्दरी नाम[8] सर्व्वायुधनिवारणी[9] ।
कर्त्ता हर्त्ता स्वयं सिद्धो जीवेच्चन्द्रार्कतारकम् ॥ ३०५ ॥
कुनटी चाभ्रमाचीकं[10] हेम तारं तथैव च ।
तत् सर्व्वं पयसा चीरैर्मर्द्यं पाच्यं दिनत्रयम् ।
मासमात्रप्रयोगेण वलीपलितवर्जितः[11] ॥ ३०६ ॥

---

(1) All the texts read चुलक, which no lexicon supports. (2) B reads षण्मासं. स्यात् is wanting in M. (3) निर्वलीपलितश्च सः, a variant in B. K reads वलि. (4) B reads तमश्नीयात्, which is incorrect. K reads माममात्रं तु मश्नीयात्, which is incorrect. (5) स भवेदमराजरः, a variant in K. (6) B has अथवा पाचीत रसं हेमा, which mars the metre and sense. (7) This charana and the next one are not found in K and M. (8) B and M read गुलिका. M reads erroneously सुन्दरीरीणां. (9) सर्वायुधनिवारणम्, a variant in M, which is not correct. K reads निवारिणी. (10) This charana and the next five ones are not found in K and M. After these charanas, we find in B the ślokas 302 and 303 again repeated. (11) We find in B the first letter मा out of the whole hemistich.

मूषामध्ये[1] विनिक्षिप्य नरेन्द्ररस[2]संयुतम् ।
जारयेद्वालुकायन्त्रे भावितं गन्धकं[3] पुनः ॥ ८७ ॥
त्रुटिं त्रुटिं[4] प्रदातव्यं गन्धकस्य पुनः पुनः ।
अनेन क्रमयोगेण[5] जायते गन्धपिष्टिका ॥ ८८ ॥
गन्धपाषाणचूर्णं तु कनकस्य रसेन तु ।
एकीकृत्य तथा खल्ले मर्द्दयित्वा यथाविधि[6] ।
आतपे स्थापयेद्देवि कनकस्य रसेन तत् ॥ ८९ ॥[7]
भावयेत् सप्तवारांस्तु स्त्रीपुष्पेण तु सप्तधा ।
शुद्धसूतपलैकं च खर्परे[8] दापयेत्ततः ॥ ९० ॥
भावितं गन्धकं दद्यान्नरपित्तेन संयुतम् ।
दोलयेद्रवितापेन[9] पिष्टिका भवति क्षणात् ॥ ९१ ॥
गन्धकं सूक्ष्मचूर्णन्तु चणकाम्लेन भैरवि ।
भावयेत् सप्तवारांस्तु[10] स्त्रीपुष्पेन च[11] सप्तधा ॥ ९२ ॥
द्रुतसूतकमध्ये तु कर्पूरं गन्धकं समम्[12] ।

---

(1) K reads मूखामध्ये, which is incorrect. (2) K reads नरेंद्रे रस, which is incorrect. My reads रसेन्द्र. (3) K reads गंधकी. (4) My reads कुटीकुटि. (5) K reads क्रियमाणेन. (6) B reads खल्वे मर्द्दं दिनावधि. (7) The 89th śloka is not found in M and My. (8) M reads कर्परो, which seems to be incorrect. (9) चालयेद्रवितापेन, a variant in B. लोलयेद्रवितापेन, a variant in M. लोलयेद्रवितापेन, a variant in My. (10) All the texts read सप्तवाराणि, which is gram. inc. (11) K, M and My read तु. (12) My reads रसं.

दापयेच्चिचिपेन्नोष्ठे[1] समाक्षाङ्गन्धपिष्टिका[2] ॥ ९३ ॥
कटुकोशातकीबीजं चण्डाली[3]कन्दमेव च[4] ।
स्तनक्षीरेण संपेष्य[5] पिष्टिकां तेन लेपयेत् ॥ ९४ ॥
पुटयेद्भूधरे यन्त्रे स्तम्भते[6] नात्र संशय: ।
हेमसम्पुटमध्ये तु समावर्त्तं[7] तु कारयेत् ॥ ९५ ॥
अष्टमांशेन तेनैव नागवेधं[8] प्रदापयेत् ।
तन्नागं जायते दिव्यं सिन्दूरारुणसन्निभम् ॥ ९६ ॥
तन्नागेनाष्टमांशेन[9] शुल्ववेधं प्रदापयेत् ।
षोडशांशेन तेनैव तारवेधं[10] प्रदापयेत् ॥ ९७ ॥
तत्तारं जायते हेम सिद्धयोगेश्वरीमतम्[11] ॥ ९८ ॥
गन्धपिष्टिपलैकं तु नागपिष्टिपलाष्टकम् ।
लेपयेन्नागपत्राणि[12] छायायां शोषयेत्तत: ॥ ९९ ॥

---

(1) B, K and My read गोष्ठे. (2) B reads गंधपिष्टिका, which seems to be incorrect. (3) K reads चांडाली. (4) M has चण्डालीकाममेव च, which seems to be incorrect. (5) सन्यक्षीरेण संमर्द्य, a variant in K. (6) M reads स्तम्भितो. My reads स्तंभते. (7) M reads समावृत्त. (8) This hemistich is not found in K. M reads तारवेधं. (9) तन्नाग चाष्टमांशेन, a variant in K. नागेन चाष्टमांशेन, a variant in M. नागेनाष्टमलशेन, a variant in My. (10) B reads ताग वेधं. K and My read तारे वेध. (11) K reads सिद्धयोगीश्वरीमतं. M and My want this hemistich (12) M reads नागपात्राणि, which is incorrect

आटरूषकपिण्डेन[1] नागपत्राणि[2] लेपयेत् ।
आरण्योत्पलके देवि दापयेच्च पुटत्रयम्[3] ॥ १०० ॥
तन्नागं म्रियते दिव्यं सिन्दूरारुणसन्निभम् ॥ १०१ ॥
तन्नागपलमेकं[4] तु शुल्वचूर्णपलाष्टकम्[5] ।
वासकस्य रसेनैव[6] प्रहरैकं तु मर्दयेत् ।
मारयेत् पातनायन्त्रे शुल्वं तन्म्रियते[7] क्षणात् ॥ १०२ ॥
षोडशांशेन तेनैव तारवेधं[8] प्रदापयेत् ।
जायते कनकं दिव्यं देवाभरणमुत्तमम्[9] ॥ १०३ ॥
या काचिद्गन्धपिष्टी तु[10] आदौ[11] नागं तु मारयेत् ।
नागं तु[12] वेधयेच्छुल्वं शुल्वं तारं तु वेधयेत् ।
कनकं जायते दिव्यं सिद्धयोग उदाहृतः[13] ॥ १०४ ॥

---

(1) आमषकसपिंडत, an incorrect variant in B. आयुषरसपिंडेन, a variant in K, which has no clear sense. (2) M reads नागपात्राणि, which is incorrect. (3) This hemistich and the next one are not found in M. (4) K reads तं नागं पलमेकं. My reads तन्नागं पलमेकं. (5) K and M read शुल्वचूर्णं पलाष्टकम्. (6) My reads वासकस्यरसेनैव. (7) B and K read तु म्रियते. My reads erroneously तं म्रियते. (8) B and K read तारे वेधं. (9) देवा-भरणभूषणं, a variant in B, M and My. (10) K has या काचिद्-गन्धपिष्टिस्तु. M has या काचिद्गन्धपिष्टस्तु, which is gram. inc. (11) M wants आदौ. (12) B and My read नागेन. This hemistich is wanting in K. (13) सिद्धयोगमुदाहृतं, an incorrect variant in B. This hemistich is not found in M and My.

गन्धकं मधुसंयुक्तं हरवीजेन[1] मर्द्दितम् ।
भूमिस्थं मासषट्कं तु[2] तारमायाति[3] काञ्चनम् ॥ १०५ ॥
उद्वर्त्तनं तु[4] तेनैव कुष्ठरोगस्य नाशनम्[5] ।
घृतेन सह संयुक्तं व्रणरोगविनाशनम्[6] ।
संवत्सरप्रयोगेण सहस्रायुर्भवेन्नरः ॥ १०६ ॥

॥ इति गन्धकबन्धः ॥

शुद्धसूतपलैकं च पलैकं तालकस्य च ।
एकीकृत्याथ संमर्द्य उन्मत्तकरसेन च ।
मारयेच्चक्रयन्त्रेण भस्मीभवति सूतकम्[7] ॥ १०७ ॥
अन्धमूषागतं ध्मातं खोटो भवति शोभनः ।
वङ्गं तारं[8] च शुल्वं च क्रमशो वेधयेद्रसः ॥ १०८ ॥
शुद्धवङ्गपलैकं च पलैकं सूतकस्य च[9] ।
द्विपलं[10] तालकं चैव उन्मत्तरसमर्द्दितम् ।
मारयेत् पातनायन्त्रे धमनात् खोटतां नयेत्[11] ॥ १०९ ॥

---

(1) My reads erroneously चिरिवीजेन. (2) M and My read मासमेकं तु. (3) B reads तारमायति. K reads तारं भवति. M reads तारमायात. The first and the last readings are incorrect. (4) M has उद्वर्त्तनेन. (5) सर्वकुष्टं विनश्यति, a variant in B, K and My. (6) K reads वर्णरोगविनाशनं. M wants this hemistich. (7) B, K and My read सूतकः, which is not correct here. (8) M reads वङ्गं. My reads वंगतारं. (9) My reads तालकस्य च. (10) M reads द्वे पले. My reads द्विपले. (11) M reads खोटतां नयेत्. M and My

तालपिष्टीपलैकं[1] तु पलैकं गन्धकस्य च ।
द्वे पले शुद्धसूतस्य[2] दिनमेकन्तु तेन वै ॥ ११० ॥
एकीकृत्याथ संमर्द्य उन्मत्तकरसेन च ।
मारयेत् पातनायन्त्रे धमनात् खोटतां नयेत् ॥ १११ ॥

॥ इति तालकबन्धः ॥

शुद्धनागपलैकं च पलैकं सूतकस्य च ।
पलद्वयं कुनट्याश्च सर्व्वमेकत्र मर्द्दयेत्[3] ।
मारयेत् पातनायन्त्रे धमनात् खोटतां नयेत् ॥ ११२ ॥
हेमपिष्टिपलैकं तु पलैकं गन्धकस्य च ।
एकीकृत्याथ संमर्द्य धुर्त्तूरकरसेन[4] च ।
मारयेत् पातनायन्त्रे धमनात् खोटतां नयेत् ॥ ११३ ॥[5]
कृष्णाभ्रकस्य सत्त्वं च कान्तं तीक्ष्णं च हाटकम् ।
शुद्धशुल्वं च तारं च माक्षिकं समभागिकम्[6] ।
अन्धमूषागतं ध्मातं खोटो[7] भवति तत्क्षणात् ॥ ११४ ॥

---

(1) K reads तालपिष्टिपलैकं. This charaṇa and the next seven are not found in M and My, (2) B reads तौपले, which is incorrect. K reads त्रिपलं. (3) K reads रंजयेत्, which seems to be incorrect. (4) K and My have धत्तूरकरसेन. (5) We do not find 112th and 113th ślokas in B. We find the following hemistich in K only :— हेमपिष्टिपलैकं तु पलैकं गंधकस्य तु, which seems to us a repetition. (6) शुद्धशुल्वतारं च माक्षिकं समभागानि कारयेत्, a variant in B, which appears to us irregular. शुद्धतारश्च माक्षीकं समभागानि कारयेत्, a variant in M and My, wherein शुल्व is not mentioned. (7) M reads खोटी..

तत्खोटपलमेकं तु पलैकं सूतकस्य च ।
पलद्वयं कुनट्याश्च सर्व्वमेकत्र मर्द्दयेत्[1] ।
मारयेत् पातनायन्त्रे धमनात् खोटतां[2] नयेत् ॥ ११५ ॥
कृष्णाभ्रकपलैकं तु[3] रसकस्य पलं तथा[4] ।
सूतकस्य पलैकं तु सर्व्वमेकीकृतं प्रिये ॥ ११६ ॥
उन्मत्तकरसेनैव मर्द्दयेत् प्रहरद्वयम् ।
मर्द्दयेद्दिनमेकं तु[5] टङ्कणेन समन्वितम् ॥ ११७ ॥
गुटिकां[6] कारयेद्देवि छायाशुष्कां तु कारयेत् ।
महावह्निगतं ध्मातं खोटो भवति सूतकम्[7] ॥ ११८ ॥
तं खोटं शोधयेच्छ्वेत[8]काचटङ्कणयोगतः ।
हेम्ना सह समावर्त्त्य[9] सारणात्रयसारितम् ॥ ११९ ॥
सहस्रांशेन तेनैव शुल्ववेधं[10] प्रदापयेत् ।
अनेन क्रमयोगेण कोटिवेधी भवेद्रसः ॥ १२० ॥
बीजद्वयं पलाशस्य पलमेकं तु सूतकम् ।
जम्बीराम्लेन संमर्द्य छायाशुष्कं तु कारयेत् ॥ १२१ ॥

---

(1) B and My read कारयेत्. (2) 'M reads खोरतां. (3) कृष्णाभ्रपलमेकं तु, a variant in K. (4) पलैकं गन्धकस्य च, a variant in M. This charaṇa and the next one are not found in My. (5) B and My read हि. After this charaṇa we do not find 70 (117—187) ślokas in M. (6) B has चङ्गुलिकां, which seems to be incorrect. (7) K and My read सूतकः. (8) K reads शोधयेद्धेतन्, which seems to be incorrect. My reads खोटं संशोधयेत् श्वेत. (9) हेम्ना सहस्रनावर्त्त्यं, a variant in B. (10) B reads शब्दवेधं.

तुम्बी च[1] मेघनादा च काकजङ्घा च चूलिका[2] ।
स्त्रीस्तन्येन प्रलिप्तायां मूषायां[3] च विनिक्षिपेत् ॥ १२२ ॥
धमयेत् खदिराङ्गारैः खोटो भवति चाक्षयः ॥ १२३ ॥
पलाशतैलं[4] संमर्द्य यावत् स्याद्रसपिष्टिका[5] ।
अन्धमूषागतं ध्मातं खोटो भवति तत्क्षणात् ॥ १२४ ॥
पूर्वशुद्धेन सूतेन[6] सह हेम्ना[7] च पार्वति ।
गोलकं कारयेत्तेन मर्दयित्वा द्रुतं[8] कृतम् ॥ १२५ ॥
ब्रह्मवृक्षस्य बीजानि कार्पासास्थि विभीतकम् ।
यवचिञ्चा तु[9] वन्ध्या च राजिका च समन्वितम् ॥ १२६ ॥
सूक्ष्मपिण्डीकृतं[10] सर्वं तेन लिप्त्वा तु गोलकम् ।
पुटनैः सप्तभिर्देवि पिष्टिकास्तम्भनं भवेत् ॥ १२७ ॥
बृहत्पुटं ततो दत्त्वा मूषायां तत्तु भावयेत्[11] ।
समावर्त्तं तु तं सूतं[12] समहेम्ना नियोजितम्[13] ।

---

(1) B and My read तुविका. (2) My reads मूलिका. (3) K reads मूखायां, which is incorrect. My reads स्तन्यं च तैः प्रलिप्तायां मूषायां. (4) K has पातालतैल. (5) My reads स्याद्गन्धपिष्टिका. (6) पूर्वसूतेन पद्धेन, a variant in D and K. (7) D reads सहेमिकेन, which is incorrect. My reads समहेम्ना. (8) D reads घृतं, which is incorrect. My reads कृत. (9) B wants तु. K reads पंचचिंचा. (10) D reads erroneously सूक्ष्मपीडीकृतं. (11) मूषायां तु भवेत्ततः, a variant in B. मूखायां तु भवेत्ततः, a variant in K. (12) B reads तत् सूतं. D has an incomplete charaṇa—समावर्त्तं तु सूत. (13) D has an incomplete charaṇa—हेम्ना नियोजितम्

शतांशेन तु चन्द्रार्कं वेधयेत् सुरवन्दिते ॥ १२८ ॥
पुनस्तेनैव योगेन पिष्टीस्तम्भं तु[1] कारयेत् ।
सारयित्वा ततो देव्या वेधयेच्च सहस्रकम्[2] ॥ १२९ ॥
एवं लक्षाणि कोटिं च वेधयेत् क्रमयोगतः ।
सप्तसंकलिकादूर्ध्वं कृत्वा वक्त्रे[3] तु गोलकम् ।
वर्षषट्केन स भवेत्[4] वलीपलितवर्जितः ॥ १३० ॥
चाण्डाली[5] राक्षसी चैव कुष्माण्डोद्भवो[6] रसः ।
बीजं सूतं च वैक्रान्तं मर्दयेत् प्रहरत्रयम्[7] ॥ १३१ ॥
विशुद्धं गोलकं[8] कृत्वा मूकमूषागतं[9] पुटेत् ।
खोटस्तु जायते देवि सुध्मातः[10] खदिराग्निना ॥ १३२ ॥
चाण्डालीराक्षसीपुष्प-रस[11]मध्वाज्यटङ्कणैः ।
महारसाष्टमध्येक-मभ्रकं चापि[12] योजयेत् ॥ १३३ ॥
नागं वङ्गं समं[13] सूतं हेम तारमथापि वा ।

---

(1) B and My read पिष्टिस्तम्भन, which is gram. inc. (2) वेधे-चैव सहस्रकं, a variant in B and My. (3) K wants वक्त्र. My reads वक्त्रं. (4) D reads सच भवेत्, which is incorrect. (5) B reads चण्डाली. (6) कुष्माण्डोद्भवे is the reading in D, which seems to be incorrect. (7) D and My have प्रहरत्रयम्. (8) D reads विशुद्धगोलक. (9) D and K read मूकमूषागत, which is incorrect. (10) B reads ध्मातः, which mars the metre. (11) चण्डालीराक्षसी-पुष्परस is the reading in B. राक्षसीपुष्परस is the reading in D. (12) B reads मध्येकमभ्रक चाति, wherein the first term is incorrect. (13) K and My read नागवंगसम.

अभ्रकं द्रुतिसत्त्वं[1] वा मर्द्दयेत् प्रहरद्वयम्[2] ॥ १३४ ॥
छायाशुष्कं ततो गोलं[3] मूकमूषागतं धमेत् ।
दत्त्वा लघुपुटं देवि खोटो भवति शोभनः ॥ १३५ ॥
रम्भा वीरा[4] कुम्भीचीरं कञ्चुकी यवचिञ्चिका ।
दीनारी चैव[5] गोरम्भा मीनाक्षी काकमाचिका ॥ १३६ ॥
एभिर्मर्द्दित[6]सूतस्य पुनर्जन्म न विद्यते ।
पूर्व्ववत् क्रमयोगेण खोटो भवति शोभनः ॥ १३७ ॥
विष्णुक्रान्ता च चक्राङ्का बला च तुलसी तथा[7] ।
महासोमाग्निवल्ली[8] च सूर्य्यावर्त्तश्च सुन्दरि[9] ।
एभिस्तु मर्द्दितः सूतः[10] पूर्व्ववत् खोटतां व्रजेत्[11] ॥ १३८ ॥
मुखेन ग्रसते ग्रासं[12] जारणा तेन सुन्दरि ।
रसोनराजिकामूले[13]र्मर्द्दितं वरवर्णिनि ।

---

(1) My reads द्रुतसत्वं. (2) B reads प्रहरत्रयम्. (3) K reads गोल्लां, which is incorrect. My reads तथा गोलं. (4) K and My read विरा. (5) K reads दीनादिनैव, which seems to be incorrect. (6) सर्म्मर्द्दितं is the reading in D, which is incorrect. (7) काचला तुलसी कथा, a variant in D. (8) B reads महासोमा च वह्नि, wherein the last term is incorrect. My reads महासोमा च वल्ली. (9) सूर्य्यावर्त्तं च सुन्दरि, a variant in D. सूर्य्यावर्त्ता च सुंदरी, a variant in K. सूर्य्यावर्त्तं च सुंदरी, a variant in My. (10) B and My have मर्द्दितं सूतं. D has मर्द्दितैः सूत. (11) B, K and My read नयेत्. (12) B has an incomplete charana—मुखेन ग्रसं. D and My want this charana and the next nine ones. K reads ग्रासो. (13) रसंनिशीविमूलैः, a variant in B.

दिव्यौषधिपुटं पाच्यं[1] रसखोटस्य लक्षणम् ॥ १३९ ॥
एतत्ते कथितं गुह्यं विज्ञेयं[2] रसवादिभिः ।
मत्प्रसादेन देवेशि तस्य सिद्धिर्न[3] संशयः ॥ १४० ॥
लुङ्कीचीरं सकाञ्जीकं[4] बीजानि[5] कनकस्य च ।
कञ्चुकी लाङ्गली चेन्द्र-वारुणी विषमुष्टिका ।
पलाश[6]मूलतोयं च मर्द्दयेत्तेन सूतकम् ॥ १४१ ॥
समे हेम्नि[7] समं सूतं पिष्टिकां कारयेद्बुधः[8] ।
महारसान् पिष्टिकार्थं[9] मर्द्दयेदौषधीरसैः ॥ १४२ ॥
यामत्रयं मर्द्दयित्वा गोलकं कारयेद्बुधः ।
पिष्टिकां बन्धयित्वा तु गन्धतैले[10] विपाचयेत् ॥ १४३ ॥
अन्धमूषागतं गोलं[11] छायाशुष्कं तु कारयेत् ।
[ ततो लघुपुटं दत्त्वा खदिराग्नौ तु धामयेत् ।
खोटस्तु जायते हेम्नि सह हेम्ना तु धारयेत् ॥ ][12]

---

(1) B reads erroneously पाच. (2) B reads विपरीतं, which is incorrect. (3) B reads तस्य सिद्धेन. (4) लुङ्कीचीरस्य काञ्जिकं, a variant in B. लुङ्किचीरस्य काञ्जीकं, a variant in My. (5) My reads बीजकं. (6) K reads पालाश. (7) B and My have समहेम्नि. (8) पिष्टिका कारयेद्बुधः, an incorrect variant in D. My reads कारयेत्ततः. (9) महानसान् पिष्टिकाराथं, an incorrect variant in B. This hemistich and the next one are not found in D. महारसं पिष्टिकार्थं, a variant in My. (10) D has गन्धतैलं, which is inaccurate. (11) D and K have चैव. (12) The śloka within brackets is found only in B and My.

अघोषो मिलते[1] हेम्नि समावर्त्तञ्च जायते ॥ १४४ ॥
भक्षणादेव सूतस्य[2] दिव्यदेहो भवेन्नरः ।
वेधयेत् सर्व्वलोहानि रञ्जितः क्रमितो रसः[3] ॥ १४५ ॥
समांशभक्षणं सूतं[4] मर्द्दयेद्दोषघोरसैः[5] ।
नष्टपिष्टं तु तं कृत्वा पूर्व्वयोगेन धामयेत् ॥ १४६ ॥
खोटस्तु जायते दिव्यः[6] षोडशांशेन वेधयेत्[7] ।
बद्धः[8] संकलिकायोगाद्दिव्यदेहगुणोत्तरम् ॥ १४७ ॥
मृगदूर्व्वा[9] चन्द्रवल्ली पक्वा चिञ्चा[10] तथैव च ।
कोकिला[11] करवीरं च वीजं चोन्मत्तकस्य च ।
काकाण्डी[12]फलसंयुक्तं मर्द्दयेत् सुरसुन्दरि ॥ १४८ ॥
समहेम्नि समं सूतं पिष्टिकां कारयेद्बुधः ॥ १४९ ॥
अथवा सारयित्वा तु समेन सह सूतकम् ।

---

(1) D reads मिलिते, which qualifies हेम्नि. My wants this charana. (2) D reads सस्यास्तु. The portion beginning with दिव्यदेहो and ending in वेधयेत् is not found in K. (3) D reads क्रामितो रसः. (4) समांशभक्षणं सूतं, a variant in B. समांश भक्षणे सूते, a variant in D. समांश भक्षणे सूते, a variant in K. (5) D reads मर्दयेत दुग्धोरसे, which appears to be incorrect. (6) B, K and My read दिव्य, which is gram. inc. (7) B and My read वेधकः. (8) D reads बद्ध. K reads बद्ध. (9) My reads मृता दूर्वा. (10) B reads erroneously पक्वचिञ्चा. D reads पक्वांचञ्ची (11) B has कोकिला. D has कोकिला My has कर्कोटा. (12) D reads काकाण्डी. K reads काकाण्डि

मल्लारसं पिष्टिकार्थं[1] मर्द्दयेदोषधीरसैः ॥ १५० ॥

यामत्रयं मर्द्दयित्वा गोलकं कारयेत्ततः[2] ।

अन्धमूषागतं[3] गोलं छायाशुष्कं तु कारयेत् ॥ १५१ ॥

ततो लघुपुटं दत्त्वा[4] ध्मातः खोटो भवेत् प्रिये ॥ १५२ ॥

मृगदूर्व्वातमासोम-रसैः[5] सूतकचारणम्[6] ।

मूलैस्त्रयाणां लाङ्गल्या रामठेन च हन्यते[7] ॥ १५३ ॥

समेन हेम्ना संयुक्तां पिष्टिकां[8] कारयेद्बुधः ।

अथ तारकपिष्टं च[9] समसूतेन कारयेत् ॥ १५४ ॥

पूर्व्ववत् क्रमयोगेन खोटो भवति शोभनः ।

अन्धमूषागतं[10] भूमौ स्वेदयेत् करिषाग्निना ॥ १५५ ॥

अहोरात्रं त्रिरात्रं वा चूर्णबन्धो[11] भवेत्ततः ।

तच्चूर्णबंधः कुरुते[12] वेधं दशगुणोत्तरम् ॥ १५६ ॥

---

(1) B reads पिष्टिकाद्वे. D has मल्लारात्तं पिष्टिकार्थं. Both the readings seem to be incorrect. (2) K reads चालयेत्ततः. My reads कारयेद्-बुधः. (3) D and K read अंधमूषागतं, which is incorrect. (4) K reads दद्यात्. (5) B reads सोमरसौ. मगदुःखिलमासोमारसैः, a variant in D. My has मृतदूर्वांक्रमासोमरसैः. (6) K reads सूतकचारिका, which has no sense. (7) D reads हन्यति. My reads रमतेन च हंस्यते. Both the readings seem to be incorrect. (8) B and My have संयुक्तं पीठिकां, which is incorrect. (9) B and My read अर्धतारक पीतं च. This hemistich and the next two are wanting in D. (10) अंध-मूषागतं is the incorrect reading in B and K. (11) D reads चूर्णं बद्धं. My reads चूर्णबद्धो. (12) D has an incomplete charana बद्ध कुरुते. My has तच्चूर्णबद्ध.

शूलिनीरससूतञ्च[1] स्रोतोञ्जनसमन्वितम् ।
पूर्व्ववत् पिष्टिकायोगात् खोटो भवति शोभनः ॥ १५७ ॥
स्रोतोञ्जनं सतगरं[2] पिष्टित्रययुतं रसम्[3] ।
धमयेद्वह्निसंक्षिप्तं[4] सूतकः सर्व्वकर्म्मकृत् ॥ १५८ ॥
हेमाभ्रं चैव ताराभ्रं[5] शुल्वाभ्रं चाभ्रतीक्ष्णकम् ।
वङ्गाभ्रं चैव नागाभ्रं समसूतेन वेधयेत्[6] ॥ १५९ ॥
यथालाभौषधीघृष्टं[7] महारससमन्वितम् ।
हेम्ना तारेण शुल्वेन तीक्ष्णवङ्गोरगैस्तथा[8] ॥ १६० ॥
एभिर्व्वस्तैः समस्तैर्वा पिष्टिं कृत्वा समे समाम्[9] ।
मारयेत् पूर्व्वविधिना गर्भयन्त्रे[10] तुषाग्निना ॥ १६१ ॥
समांशं सूतकं दत्त्वा वारं वारं पुनः पुनः ।

---

(1) शूलनीरससूतं च, a variant in D. (2) स्रोतोञ्जनसतगुणं, a variant in D. K reads समगरं. (3) शुष्टित्रययुतं रसः, a variant in D, which seems to be incorrect. (4) B reads वह्निसंक्षिप्त, which has no clear sense. (5) The portion beginning from ताराभ्रं and ending in चैव is wanting in K. My has हेमाभ्रकं च ताराभ्रं. (6). समसूतेन बंधयेत्, a variant in B and My. D reads समं सूतेन वेधयेत्, K has समं सूतेन बंधयेत्. (7) यथालाभौषधीघृष्टं, a variant in D. यदा लाभौषधीघृष्टं, a variant in My. (8) तीक्ष्णनागरसेन च, a variant in D, which seems to be incorrect. (9) पीठीं कृत्वा समे समाः, a variant in B and My, which is partly correct. D reads समः, which is incorrect. (10) B and D read गर्भयन्त्रे. For the description of गर्भयन्त्र vide रस. र. Chap. IX, verses 28–31.

जायन्ते विविधाः स्फोटाः[1] कान्तवशो[2] महारसः ॥ १६२ ॥
भवेत् संकलिकायोगात् वेधो दशगुणोत्तरः ॥ १६३ ॥
स्फोटः पोटस्तथा[3] भस्म धूलिः कल्कश्च[4] पञ्चमः ।
एते निगलगोलाभ्यां[5] सर्व्वबन्धफलोदयाः[6] ॥ १६४ ॥
शिग्रुसम्भवं क्षारं[7] ब्रह्मबीजानि गुग्गुलुः ।
सैन्धवं द्विगुणं दत्त्वा मर्द्दयित्वा विचक्षणः ॥ १६५ ॥
पिष्टिकावेष्टनं कृत्वा कल्कमानेन[8] सुन्दरि ।
विल्वप्रमाणं कृत्वा तु मूषामतिदृढ़ां शुभाम्[9] ॥ १६६ ॥
ऊर्द्धाधो लवणं दत्त्वा मूषामध्ये[10] रसं क्षिपेत् ।
मूषालेपः प्रदातव्यो[11] दग्धशंखादिचूर्णकः[12] ॥ १६७ ॥

---

(1) जायते विविधः स्फोटः, a variant in D, K and My. (2) D reads कान्तवेधो. K and My read कान्तिवशो. (3) B and My read पाटस्तथा. (4) D reads कल्कं च. My reads धूली कल्कं च. (5) D reads गोलाभ्यां. K reads कालाभ्यां. My reads रोगाभ्यां. (6) सर्वबंधा फलोदया, a variant in B. सर्वं बन्धफलो दिशेत्, a variant in D. सर्वबन्धः फलोदया, a variant in My. (7) शुग्रकंसंभवं क्षीरं, a variant in B and My. D reads क्षारो. सिग्रुसजंयवक्षारं, a variant in K. (8) D has मूषा यत्नेन. K has मूषामनेन. (9) D has an incomplete hemistich —विल्वप्रमाण मूषां कृत्वामाटी दृढ़शुभम्. (10) D and K read मूषामध्ये, which is incorrect. (11) मूषालेपे प्रदातव्यं, a variant in B and My. मूषालेपा प्रदातव्यं, a variant in D. मूषालिपप्रदातव्य', a variant in K. All the texts are incorrect. (12) All the texts read चूर्णकम्, which is not lexicographically correct.

मुखं तस्या[1] दृढं बद्ध्वा लोणमृत्तिकया[2] पुनः ।
कारयेच्च सुधालेपं[3] छायाशुष्कं च कारयेत् ॥ १६८ ॥
उक्तो निगलबन्धोऽयं[4] पुत्रस्यापि न कथ्यते ॥ १६९ ॥
तुषकर्षाग्निना भूमौ मृदुस्वेदं तु कारयेत्[5] ।
अहोरात्रप्रमाणेन[6] पुटं दत्त्वा प्रयत्नतः[7] ॥ १७० ॥
एवं[8] मूषा महेशानि रसस्य खोटतां नयेत्[9] ।
सुध्मातः[10] खदिराङ्गारैः रसेन्द्रः खोटतां व्रजेत्[11] ॥ १७१ ॥
सौवीरं टङ्कणं काचं[12] दत्त्वा खोटं तु शोधयेत्[13] ।
अक्षीणो मिलते[14] हेम्नि समावर्त्तस्तु जायते ॥ १७२ ॥

---

(1) D reads मूखा तस्य, which is incorrect. My reads तस्य. (2) D reads लवणमृत्तिकया, which destroys the metre. K reads लोणहृतिकया, which is incorrect. My reads लोहमृत्तिकया. (3) D has हढा मूखा. K has हढां मूखां. Both are improper. (4) B and D read निगड-बधोयं. K reads मुक्तो निगलबंधोयं, wherein the first term is incorrect. (5) मृद्वग्निचतुष्टयोः, a variant in D. मृदुस्वेदचतुष्टयोः, a variant in K. (6) B and My have चहोरात्र' त्रिरात्रं वा. (7) D reads प्रमाणतः. (8) B reads सर्वं. This hemistich is not found in D and My. (9) B has खोटता व्रजेत्. (10) B and My read सुध्मातं. D reads सुध्मानं, which is incorrect. (11) रसेंद्रं खोटतां नयेत्, a variant in B. रसेन्द्रं खोटतां व्रजेत्, a variant in D. रसेन्द्रो खोटतां नयेत्, a variant in My. The last two readings seem to be incorrect. (12) D reads काचं, which is incorrect. (13) दत्वा दत्वा विशोधयेत्, a variant in B and My. दत्त्वा खोटे तु साधयेत्, a variant in D. (14) D and K read अखिणो भिलित, wherein the first term is incorrect. अक्षीणौ निर्मलं, a variant in My.

समांशभक्षणं तं तु[1] शुद्धसूतेन कारयेत् ।
भ्रमयेत् पूर्व्वयोगेन[2] रसेन्द्रं खोटतां[3] नयेत् ॥ १७३ ॥
भवेत् संकलिकायोगात् वेधो दशगुणोत्तरः[4] ॥ १७४ ॥
पलाशबीजनिर्य्यासं कोकिलोत्मत्तवारुणि[5] ।
शूलिनीरससंयुक्तं[6] पेषयेत् सैन्धवान्वितम् ॥ १७५ ॥
पिष्टिकावेष्टनं कृत्वा निगलेन तु बन्धयेत् ॥ १७६ ॥
मूषायां निगलो देवि लेपितः शिवशासनात्[7] ।
रसस्य परिणामाय महदग्निस्थितो[8] भवेत् ॥ १७७ ॥
अभ्रकस्य तु पत्रेण वज्रार्कक्षीरसिक्तुना[9] ।
ताप्येन लोहकिट्टेन[10] सिकतामृन्मयेन च ॥ १७८ ॥

---

(1) B and K have समांश भक्षण तत्. D has समांसं भक्षणांसं तु. (2) भर्मं तत्प्रयोगेन, a variant in D. (3) रसेन षोडतां is an incorrect reading in D. My reads erroneously रसेन्द्रो खोटतां. (4) B reads दशगुणांत्तरं, which is incorrect. (5) कोकिलोत्तरवारुणी, a variant in D. (6) शूल्नीरसेन संयुक्त, a variant in D. (7) B reads शीवसासन. K reads विश्वासासनात्. Both the texts are incorrect. This hemistich and the next one are not found in D and My. (8) B has परीणामाया माहन्दग्निस्थितो. K reads महादग्निस्थितां. Both the texts are incorrect. The text adopted above is also gram. inc., महाग्निस्थितो is the proper term, which mars the metre. (9) D reads पत्रिणा instead of सिक्तुना. K reads वज्रका and My reads वज्राक instead of वज्रार्क (10) B reads तापेन D reads ताप्येन लोहकठिन, which seems to be incorrect.

एभिस्तु निगलैर्बद्धः[1] पारदीयो[2] महारसः ।
नातिक्रामति मर्य्यादां वेलामिव महोदधिः[3] ॥ १७९ ॥
तैलार्कक्षीरवाराही[4]-लाङ्गल्यो[5] निगलोत्तमः ।
काकविट् ब्रह्मबीजानि लाङ्गली निगलो वरः ॥ १८० ॥
वाकुची ब्रह्मबीजानि[6] कर्कटाख्यौनि सुन्दरि ।
सामुद्रं साम्बरं[7] चैव लवणं निगलोत्तमः ॥ १८१ ॥
स्नुह्यर्कसम्भवं क्षीरं ब्रह्मबीजानि[8] कोकिला ।
करकस्य तु बीजानि लोहाष्टांशेन मर्द्दयेत् ॥ १८२ ॥
निगलोऽन्यस्तु गोजिह्वा-मूलानि क्षीरजोऽपरः ।
वाकुची ब्रह्मबीजानि[9] स्नुह्यर्कक्षीरसैन्धवम्[10] ।
ज्वालिनी काकविष्ठा च[11] प्रशस्तो निगलोत्तमः ॥ १८३ ॥
लवणं टङ्कणं क्षारं शिला तालकगन्धकम्[12] ।
तथाम्लवेतसं ताप्यं[13] हिङ्गुलं समभागिकम् ।
स्नुह्यर्कपयसा युक्तं पेषयेन्निगलोत्तमम्[14] ॥ १८४ ॥

(1) निगलैर्बद्धः is the incorrect reading in D. (2) D reads पारदोऽयं. (3) D reads महोदधेः, which is gram. inc. (4) D and K have वाराहि. My has तारारि. (5) B and My read लाङ्गल्या. (6) B reads काकची ब्रह्मबीजानि. The portion from कर्कटाख्यौनि upto ब्रह्म-बीजानि is wanting in D. (7) My reads सैन्धवं. (8) K reads ब्रह्मबीजानि. (9) B has वाकुचिर्ब्रह्मबीजानि. (10) D has सैन्धवैः, which is not proper. (11) D reads तु. K reads ज्वालिनि, which is incorrect. (12) B reads तारकगंधकं. (13) D has an absurd variant तावात् पवैत समाप्य.. तिन्त्राम्लि वेतसं ताप्यं, a variant in My. (14) D reads निगलोत्तमः.

पिष्टिकां वेष्टयेद्देवा[1] भेकेन निगलेन तु।
लोह[2]मूषागतं प्राग्वत् खोटं कृत्वा तु वेधयेत्[3] ॥ १८५ ॥
द्वितीयं[4] गोलकं वक्ष्ये पिष्टिकाख्यम्[5]मुत्तमम् ॥ १८६ ॥
द्विपदीरजमूत्राणि सैन्धवाभ्रं च गुग्गुलुः[6]।
पिष्टीं संवेष्ट्य कल्केन मृदा तु पुनरष्टधा ॥ १८७ ॥
तुषकर्षाग्निना भूमौ[7] मृदुस्वेदं तु कारयेत्।
अहोरात्रं त्रिरात्रं वा[8] पूर्व्ववत् खोटतां[9] नयेत् ॥ १८८ ॥
वाकुची ब्रह्मबीजानि[10] गगनं विमलं मणिम्[11]।
सौवर्चलं[12] सैन्धवञ्च टङ्कणं गुग्गुलुं तथा[13] ॥ १८९ ॥
द्विपदीरजसा मूत्रं[14] सुभस्मं तच्च[15] मर्द्दयेत्।
पिष्टीं संवेष्ट्य[16] कल्केन पूर्व्ववत् खोटतां[17] नयेत् ॥ १९० ॥

---

(1) विष्टिवेष्टयेद्देवा, an incomplete charana in D. K reads देवा, which is incorrect. (2) B reads लेपं. (3) K reads वंधयेत्. (4) B, D and My have द्वितीय. K wants this. (5) D reads पीष्टिकं काख्य. K reads पिष्टीकाख्यम. (6) सैन्धवाभ्रां सुगुग्गुलुः, a variant in D. My reads सगुग्गुलु. (7) D has an incomplete charana—कर्षाग्निभूमौ. (8) D has वत्रं वापि, which seems to be incorrect. (9) M reads खोटतां. (10) वाकुचिब्रह्मबीजानि, a variant in K. (11) B reads विमलमणिः. D reads विमलां मणीम्. K reads विमलां मणि. M reads विमलं गगनं मणिः. My reads विमलं मणि. (12) M has सुवर्चलं. (13) K reads erroneously गुग्गुलुस्तथा. (14) द्विपदीरजसुमूत्रं, a variant in B. द्विपदीरसमूत्र च, a variant in D. (15) B reads सुभस्मकच. D reads सुभस्म च. Both are incorrect. (16) B, D, K, M and My read पिष्टिकां वेष्टा, which is gram. inc. (17) M reads खोटतां.

विषबीजं[1] ब्रह्मबीजं बीजानि कनकस्य च ।
मूलानि यवचिञ्चायाः[2] लाङ्गली चेन्द्रवारुणी ॥ १८१ ॥
कोकिलार्कस्नुहीक्षीरं[3] सैन्धवाभ्रकगुग्गुलु ।
पिष्टीं संवेष्ट्य[4] कल्केन पूर्ब्बवत् खोटतां नयेत् ॥ १८२ ॥
लाङ्गली ब्रह्मबीजानि विष्ठा काकस्य गुग्गुलुः ।
श्वेताश्वमारमूलानि मूलं कनकवारुणी ॥ १८३ ॥
तैलं सैन्धवसंयुक्तं मर्द्दयेत्तद्दिनत्रयः ।
पिष्टीं संवेष्ट्य कल्केन पूर्ब्बवत् खोटतां नयेत् ॥ १८४ ॥
वाकुची ब्रह्मबीजानि जीरकद्वयगुग्गुलु ।
सैन्धवाभ्रं कुलीरास्थि टङ्कणं ज्वालिनीरसः[5] ॥ १८५ ॥
पिष्टीं संवेष्ट्य कल्केन मृदा तु पुनरष्टधा ।
तुष[6]कर्षाग्निना भूमौ मृदुस्वेदं तु कारयेत् ॥ १८६ ॥
अहोरात्रं त्रिरात्रं वा[7] रसेन्द्रं खोटतां[8] नयेत् ।
दशसंकलिकायोगात्[9] शब्दवेधी महारसः[10] ॥ १८७ ॥

---

(1) B reads वीषबीजं. D reads ज्याघ्रीबीजं.  (2) D reads यव चिंचाया. K reads मूलानि यवचिंचाया. Both are incorrect.  (3) K has कोकिलाकस्नुहीक्षीरं, which is incorrect. My has स्नुहिक्षीर.  (4) B, K and My read पिष्टिकां वेष्ट्य, which is gram. inc. This hemistich and the next five are not found in D.  (5) D reads ज्वलनीरसः.  (6) B reads तुषा, which is incorrect.  (7) D reads त्रिरात्रकं, which is incorrect.  (8) M reads रसेन्द्रः खोटतां, which is not correct. My reads रसेन्द्रो खोटतां नयेत्, which is incorrect.  (9) M has दशसंकलिकायोगात.  (10) D and My read शतवेधी महारसः. M reads शब्दवेधी भवेद्रसः

शङ्करस्य द्विभागन्तु पारदस्य त्रयं[1] तथा ।
पिष्टिकां कारयेत्तेन तप्तखल्ले तु काञ्जिके[2] ॥ १९८ ॥
पूर्व्ववन्निगलोपेतं[3] खोटं कृत्वा तु वेधयेत् ।
दग्धसंकलिकायोगात्[4] शब्दवेधी[5] महारसः ॥ १९९ ॥
वङ्गसूतकराजेन्द्र-शिलागन्धकमाक्षिकैः ।
कान्तपाषाणचूर्णेन भूलताभिः समन्वितः ॥ २०० ॥
ध्मातो मूषागतश्चैव[6] रसोऽयं[7] सुरवन्दिते ।
रसांश्चोपरसान् लोहान्[8] रत्नानि च मणींस्तथा[9] ।
प्रकाशमूषागर्भे च[10] ग्रसते वड़वानलः[11] ॥ २०१ ॥
माक्षिकं दरदश्चैव गन्धकं च मनःशिला[12] ।

---

(1) पारदन्त्रितयं is the reading in D. (2) तदा खल्ले तु काञ्जिकम्, a variant in D. (3) पूर्व्वंनिगलोपेतं, an incomplete variant in D. (4) दग्धशृङ्खलिकायोगात्, a variant in M. (5) D and My read शब्दवेधो. The ślokas 198th and 199th are not found in B and K. (6) B has मूषागते चैव. D has मूषागतो नैव. M has ध्माते मूषागतेनैव. My has मूषागतेनैव. All the texts seem to be incorrect. (7) B reads रसादि. (8) K reads चैव. (9) D reads रत्नमणीन्सदा. K and My read मणिस्तथा. M reads मणीन्सदा. (10) प्रकाशमूषया गर्भे, a variant in B. प्रकाशमूषाया गर्भो, a variant in D. प्रकाशमुखगर्भे च, a variant in K. प्रकाशमूषामध्यगतो, a variant in M. प्रकाशमूषाया गर्भे, a variant in My. All the texts are more or less incorrect. (11) ग्रसते चतुरङ्गुलोनलः, a variant in D, which is senseless. My reads वड़ानिलः. (12) D has समं शिलाम्, which is incorrect.

राजावर्त्तं प्रवालं च कङ्कुष्ठं तुत्थकं[1] तथा ॥ २०२ ॥
पीतरक्तगणैर्भाव्यं कङ्गुणी[2]तैलमिश्रितम् ।
स्फोटं इष्टिकया पक्वं[3] द्रुतं हि गलिके क्षिपेत्[4] ॥ २०३ ॥
उष्णां तु सिकतां[5] दत्त्वा त्रिरात्रमपि धामयेत्[6] ॥ २०४ ॥
आरनालेन तत् स्विन्नं[7] दोलायां घृतमेव च[8] ।
एवं संरक्षितः[9] सूतः शरीरधनकृद्[10]भवेत् ॥ २०५ ॥
उद्घाटः परमः[11] प्रोक्तः सर्व्वकर्म्मक्षितः परः[12] ।
क्लीवी पतङ्गी[13] दुर्द्रावी दुर्मेली नैव जायते ।
वर्णान्यत्वञ्च कुरुते[14] स्फोटयेद्वरवर्णिनि[15] ॥ २०६ ॥

---

(1) D reads कुष्ठं तुथकं, which seems to be incorrect. (2) B reads कंगुणि. M reads कुङ्कुणी. My reads कंगुणी. (3) M has भिस्त्री. कलापक्वं, which seems to be incorrect. (4) हतं हि गलिका पचेत्, a variant in B. घृतं हि गलिकं क्षिपेत्, a variant in D. घृतं हि गलिका क्षिपेत्, a variant in K. द्रुत हो गालिका पचेत्, a variant in M. द्रुतं हि गलिका पचेत्, a variant in My. (5) D reads सिकाता, which is incorrect. M reads आष्णां तु सिकता. (6) D and K read धारयेत्. (7) D reads तक्षिन्नं, which seems to be incorrect. (8) B reads डोलायां. M and My read डोलायां द्रुतमेव च. (9) B reads सुरक्षितः. K reads संरक्षितः. M reads स गदितः. My reads सलक्षितः. (10) B reads शरीरदृढकृद्. (11) M reads उत्स्फोटः. My reads उद्घाटः पंचमः. (12) B and K read परं. (13) M reads चिवी पतङ्गी. (14) D reads वर्ण्यं त्वचं प्रकुरुते, which appears to be incorrect. (15) स्फटयेद्वरवर्णिनी, a variant in B. D reads वरवर्णिनी, which is incorrect. K has स्फोटयद्वरवर्णिनि. My has स्फोटयेद्वरवर्णिनि.

बन्धमेवं[1] द्रुतं कृत्वा कुरुते वज्रजारणम्[2] ।
तत्समाचक्ष्व देवेशि किमन्यच्छ्रोतुमिच्छसि ॥ २०७ ॥

इति श्रीपार्वतीपरमेश्वरसंवादे[3]
रसार्णवे रससंहितायां
वज्रभस्मो नाम[4]
पञ्चदशः पटलः ॥ १५ ॥

---

(1) B reads बद्धमेवं. D and My read बद्धमेव. M reads बन्धमेतत्, which is grammatically incorrect. (2) कुरु वज्राणि जारणं, a variant in K. कुरि वस्त्राणि जारणम्, an incorrect variant in M. My reads कुरु वज्राधिजारणं. (3) B, M and My want this line. (4) D, M and My have पिष्टिस्तम्भनं नाम. K has पिष्टिस्तम्भमहारसोपरसलोहवधो नाम

## षोड़शः पटलः ।

श्रीदेव्युवाच ।[1]

बद्धस्य[2] रसराजस्य[3] कथं द्रावणमीश्वर[4] ।
वज्रादिजारणं चापि[5] कथमाज्ञापय प्रभो ॥ १ ॥

श्रीभैरव उवाच ।[6]

तं खोटं सूक्ष्मचूर्णन्तु स्त्रीरजोभिस्तु भावयेत्[7] ॥ २ ॥
पुनर्नवा च[8] मीनाक्षी रम्भाकन्दः[9] स्त्रियोरजः ।
मणिमन्थं[10] शिलाधातुं सर्व्वमेकत्र पेषयेत्[11] ॥ ३ ॥
कल्केनानेन संक्षमारोटरससंयुतम्[12] ।
तं रसं[13] भूर्ज्जपत्रे तु बद्धा पोटलिकां[14] ततः ॥ ४ ॥
दोलायन्त्रे[15] सुरेशानि स्वेदयेद्दिवसत्रयम् ।
अनेन क्रमयोगेण मृतः सूतो[16] भवेद्द्रुतः[17] ॥ ५ ॥

---

(1) M has देव्युवाच. (2) B reads शुद्धस्य. (3) D reads रसवज्रस्य, which is incorrect. (4) B reads erroneously द्रावणमीश्वरि. (5) B and D read वापि. (6) This is wanting in D. (7) This hemistich is not found in D. (8) पुनर्नवौ द्वौ is the reading in B, M and My. (9) M reads रंभाकंदं. (10) B reads माणिमथं. D reads मणिमथं. K reads मनिमथ. M reads माणिबन्ध. My reads माणिमङ्ग. (11) M has मेलयेत्. (12) D reads संयुतः, which is incorrect. (13) D and K read तद्रसं. (14) M reads पोट्टलिकां. (15) B, M and My read डोलायन्त्रे. (16) B and D read मृतसूतो. M reads द्रुतमूते, which is incorrect. (17) My reads erroneously भवेत् ध्रुव

आर्द्रकं मूलकं शुण्ठी लशुनं हिङ्गु माक्षिकम् ।
त्रिक्षारं पञ्चलवणं कांक्षी कासीसगन्धकम्[1] ।
अम्लवर्ग[2]समायुक्तं गोलकं कारयेत् प्रिये ॥ ६ ॥
तस्य मध्यगता पिष्टी[3] दोलायां स्वेदनेन तु[4] ।
द्रवते नात्र सन्देहो द्रुतं जारयते रसम्[5] ॥ ७ ॥
बद्धं मल्लारसं[6] देवि द्रावयेत् पादयोगतः ।
द्रुतपादे ततो देयं[7] द्रावयित्वा पुनर्द्रवेत्[8] ॥ ८ ॥
एवं बद्धं द्रुतं कृत्वा समद्विविगुणादिकम्[9] ।
तस्मिन् द्रुते जारणा च[10] कर्त्तव्या कर्म्मवेदिभिः ॥ ९ ॥
कुक्कुटीकन्दमार्जारी[11] उच्चटापोस्वरी तथा[12] ।

---

(1) कांक्षिकौशीसगन्धकम्, a variant in D. कांक्षीकौशीसगधक, a variant in K. काचीमांसीसगन्धकम्, a variant in M. (2) B and My read चाम्लवर्ग. M reads बन्धवर्ग. (3) तस्य मध्यगतं पिष्ट, a variant in D. तस्य मध्ये गतां पिष्टिं, a variant in K. My has an incomplete charana—तस्य सा पिष्टि. (4) D reads दोलायन्व स्वेदयेन्न तु, which is incorrect. डोलायां स्वादनेन तु, a variant in M, which is partly correct. My reads डोलायां. (5) D reads रसे. M reads रसः. Both are incorrect. (6) D reads मल्लारसे, which is incorrect. We do not find the 8th, 9th and 10th ślokas in My. (7) द्रुत पादस्ततो देयः, a variant in D. द्रुतपारदरोधाय, a variant in M. (8) M reads पुनर्दमेत्, which is incorrect. (9) K reads समं द्विविगुणादिकम्. M reads समद्विविगुणाधिकम्. (10) M reads चारणा च. (11) कर्कटीकन्दमार्जार, a variant in D. कुकुटीकदयार्जार, a variant in K. (12) सर्पाय मामरी तथा, a variant in D. सर्पांश मांसरी तथा, a variant in K.

क्षीरकञ्चुकया युक्तं[1] स्वेदितं च द्रुतं[2] रसम् ॥ १० ॥
द्रुतं दोलादिसंभिन्नं[3] कुक्कुट्याद्यैः[4] दिनत्रयम् ।
आर्द्रकाद्यैर्द्रुतश्चैव[5] तत्सूतं स्वेद्यतां[6] व्रजेत् ॥ ११ ॥
वज्रं[7] द्रुतं यथा[8] सूतं जारयेत्[9] सुरवन्दिते ।
ईश्वरस्तस्य[10] विज्ञेयो देवदेवो[11] जगद्गुरुः[12] ॥ १२ ॥
विधाय खोटं यत्किञ्चित्[13] सृतकोट्यापिते रसे[14] ।
षड्गुणं हेम जार्यं तु सारयेत् सारणात्रयम्[15] ॥ १३ ॥
कोट्यंशेन[16] तु तेनैव शुल्बवेधं[17] प्रदापयेत् ।
जायते कनकं दिव्यं देवाभरणभूषणम् ॥ १४ ॥
पुनस्तत्तु[18] रसेन्द्रस्य वज्ररत्नानि जारयेत्[19] ।

---

(1) क्षीर कञ्चकया युक्त, a variant in D. (2) सेवित च द्रुतरसः, a variant in D. M reads मृत. (3) D has दोलःसंसित कर्क. K has दोलादिसंसित—, an incomplete charana. M and My read डोलादिसम्भिन्नं. (4) B reads ककमाद्या. D reads कर्कट्याद्यै. K reads कर्कटाद्यै. (5) B and K read आर्द्रकादि. D reads आर्द्रकादि घृते चैव, which seems to be incorrect. This charana and the next nine ones are not found in My. (6) B and M read स्वच्छतां. D and K read स्वेदतां. (7) B and M read वज्र (8) K reads यदा. (9) D reads पारदः, which seems to be incorrect (10) M reads ईश्वरस्सं तु. (11) M reads देवदेव्या. (12) D reads erroneously देवदेवाव भवद्गुरुम्. (13) D reads त यत्कि, which is incorrect. (14) मृतकोट्यापितो रसः, a variant in M. (15) B reads सारणात्रये. (16) D has वधा-स्रेन, which is senseless. (17) D reads शुल्वं वर्ध. (18) B has पुनस्तत्तु D has पुनस्त. K has पुनस्तस्य. (19) D reads कारदेत्.

प्रकाशमूषागर्भे च हठाग्नौ जरते क्षणात्[1] ॥ १५ ॥
उग्रटा[2]मीननयना-सर्पाक्षी[3]रक्तचित्रकैः ।
एतैः रत्नं द्रवत्याशु[4] नीलमाणिक्यमौक्तिकम्[5] ॥ १६ ॥
विष्णुक्रान्ता च चक्राङ्गा[6] कुमारी यवचिञ्चिका[7] ।
वज्राणि पद्मरागाश्च[8] राजावर्त्तादिसस्यकम्[9] ।
ओषधीनां द्रवं दत्त्वा तप्ते[10] सूते विनिक्षिपेत् ॥ १७ ॥
पश्चाद्रत्नानि देयानि द्रवन्ति सलिलं यथा ॥ १८ ॥
दोलायां[11] स्वेदयेद्देवि बिड़योगेन[12] जारयेत् ।
प्रकाशमूषागर्भे च हठाग्नौ जारयेत् क्षणात् ॥ १९ ॥
शंखेनैवार्कदुग्धेन[13] युटेन शतवारितम् ।
तद्बीजं[14] क्षारसंयुक्तमम्लवर्गेण[15] भावयेत्[16] ॥ २० ॥

---

(1) D and K read जायते क्रमात्. (2) D reads उग्रसं, which is incorrect. (3) D has साप्यांजी, which is unintelligible. K has सर्पाचि. (4) एते रत्नप्रवत्यांसु, an incorrect variant in D. M reads द्रुवन्त्याशु, which is incorrect. (5) तिलमाणिक्यमौक्तिकं, a variant in K, which is not correct. (6) D reads वक्राङ्गा. M reads चक्राङ्गी. (7) D has पवचिंचिका. (8) D and K read पद्मराग च. (9) K reads सःस्यकं, which is incorrect. (10) D reads तप्ता. K reads तप्तः. (11) D reads दोलायन्त्रे, which destroys the metre. (12) D reads वीरयोगेन, which is incorrect. (13) K reads शनैर्वार्कदुग्धेन, which destroys the metre. (14) B reads तद्विड़. D reads तद्विड. M reads तत्पिष्टी. (15) B and M read क्षारलवणेन. (16) B and M read भावितम्.

विड्हिङ्गुलसंयुक्त[1]-राजावर्त्तप्रवालकैः[2] ।
गन्धकः शिलया युक्तः[3] खोटानां जारणे हितः[4] ॥ २१ ॥
मूषालेपादिसंयोगात्[5] वज्रहेम्नो हि जारणम्[6] ।
तल्लेपाज्जायते देवि[7] विड्योगेन जारणम्[8] ॥ २२ ॥
पश्चात्तेन प्रदातव्यं षट्त्रिंशांशद्रवेण च[9] ॥ २३ ॥
ततो वै सूतराजस्य जायते रश्मिमण्डलम्[10] ।
तिर्य्यगूर्द्ध्वमधोव्यापि[11]तेजःपुञ्जेन पूरितम् ॥ २४ ॥
इत्थं शुद्धो भवेत् सूतः[12] चिन्तामणिरिव[13] स्वयम् ।
सदेवैः पूज्यते सिद्धैः[14] द्वितीय इव शङ्करः[15] ॥ २५ ॥

---

(1) विड्हिङ्गुलसंयुक्तं, a variant in M. (2) राजावर्त्तं प्रवालकैः, a variant in D. राजावर्त्तं प्रवालकम्, a variant in M. (3) गन्धकैमशिलायुक्तैः, a variant in D, which is senseless. M reads गन्धकं शिलया युक्तं. (4) D and K read हितं. M reads खोटानां जारणे हितम्. (5) D and K read मूखालेपो हि संयोगात्. M reads मूषालेपाभिसंयुक्तं. (6) B has वज्रो हेमाद्धिजारणं. D has वज्रो हेम्ना हि जारणम्. K has वज्रो हेमादिजारणं. M has वज्रहेमाभिजारणम्. (7) B reads तद्वेपाज्जारते देवि. D reads तत्रपाजारयेद्देवि. K reads तल्लेपा जारये देवि. (8) B, D and K read विड्योगेन जारयेत्. M reads विड्हेमाभिजारणम्. (9) K reads षट्त्रिंशांशद्रवेन च, which is incorrect. (10) जायते रश्मिमंडले, a variant in B. जारयेद्रश्मिमण्डले, a variant in D. जायते रश्मिमंडलं, a variant in K. (11) B and K read वापि, which seems to be inaccurate. (12) B reads इत्यष्ट भवेत् मृतः. D reads इत्थं या भवेत् सूतः. K reads इत्थं यथा भवेत् सूतः. M reads युक्तं यथा भवेत् मूतं. (13) K reads चिन्तमणिरिव, which is not correct. (14) D and K read सर्वदेवैः प्रपूज्यन्ते, which is incorrect. (15) K reads सिद्धैर्द्वितीयशङ्करः.

लोकानुग्रहकर्त्ता च भुक्तिमुक्तिप्रदायकः।
जारयेच्च महानीलं तत्त्वसंख्याक्रमेण[1] तु ॥ २६ ॥
भ्रमते दक्षिणावर्त्तस्तदासौ खेचरो रसः[2]।
वेधयेत् सर्व्वलोहानि भारसंख्यानि[3] पार्व्वति ॥ २७ ॥
एवं जीर्णस्य सूतस्य शृणु कापालिरञ्जनम् ॥ २८ ॥[4]
शुल्वपत्रपलैकं तु[5] पलार्द्धं[6] गन्धकस्य च।
टङ्कणं कर्षमेकं तु कर्षैकां रसकाञ्जलीम्[7] ॥ २९ ॥
माक्षिकं[8] कर्षमेकं तु सर्व्वमेकत्र कारयेत्[9]।
अन्धमूषागतं ध्मातं खोटो[10] भवति तत्क्षणात् ॥ ३० ॥
तं खोटं सूक्ष्मचूर्णन्तु चणकाम्लेन[11] मर्द्दयेत्।
आरण्य[12]गोमयेनैव पुटान्[13] दद्याच्चतुर्द्दश ॥ ३१ ॥
इन्द्रगोपकसंकाशं जायते नात्र संशयः ॥ ३२ ॥
तच्चूर्णं मधुना युक्तं शुद्धतारं तु रञ्जयेत्।

---

(1) D reads तत: संख्याक्रमेण. (2) तदासौ खेचरगो रसः, a variant in B. सूदासक्तो खेचरो रसः, a variant in M, which is incorrect. (3) M reads त्वारसंख्यानि, which is incorrect. (4) After this hemistich we find in B अतः परं प्रवक्ष्यामि शृणु कापालिरंजनं ; in D अतः पर कलापालनी ; in K अतः परं कपालिनि. (5) D has शुल्वपत्रकपोकं तु, which is incorrect. K has शुल्वपत्र पलेकं तु. (6) B reads पलैकं. (7) कर्षैकं रसकाञ्जलीं, a variant in B. कर्षैकं रसकाञ्जलं, a variant in D. कर्षैका रसकाञ्जली, a variant in M. (8) B reads माक्षीकं. (9) M reads मर्दयेत्. (10) M reads खोटी. (11) B and K read दनुजाम्लेन. M reads निकुचाम्लेन. (12) D reads अरण्य. (13) B, K and M read पुटं.

रञ्जयेत् त्रीणि वाराणि[1] शोभनं हेम जायते[2] ॥ ३३ ॥
एष कापालिको योगः सर्व्वलोहानि रञ्जयेत् ।
रञ्जयेद्वङ्गसूतं च[3] वज्रवञ्चश्च[4] रञ्जयेत् ॥ ३४ ॥
आरचूर्णपलैकं वा[5] मृतनागपलं तु वा[6] ।
वङ्गाभ्रकपलैकं वा[7] तीक्ष्णचूर्णपलं तु वा[8] ॥ ३५ ॥
त्रिशुल्वं नागवङ्गौ वा[9] एकैकांशसमन्वितम्[10] ।
त्रिशुल्वं गैरिकैकैक[11]मथवा तीक्ष्णमाक्षिकम् ॥ ३६ ॥
अथवा तीक्ष्णभागौ द्वौ त्रयो घोषा नवोरगाः[12] ।
ताम्रस्य नव भागाः स्युरारभागचतुष्टयम्[13] ॥ ३७ ॥
अथवा देवदेवेशि माक्षिकस्य पलद्वयम् ।
मयूरग्रीवतुत्थैकं[14] मृतनागपलं तथा ॥ ३८ ॥

(1) त्रीणि वाराणि is grammatically incorrect. This hemistich and the next one are not found in D (2) K reads जारयेत्, which is not correct. (3) M reads रञ्जयेद्वङ्गसूतेन. (4) D and M read वज्रवङ्ग च. (5) D reads च. आरचूर्ण पलैकञ्च, a variant in K. M reads तु. (6) मृतनागं पलं तु च, a variant in D. K reads च. (7) D reads तु. वंगाभ्रकं पलैक च, a variant in K. (8) B reads च वा. D reads तीक्ष्णचूर्णं ये तु वा, which is incorrect. तीक्ष्णचूर्णं पलं तु वा, a variant in K. (9) M has नागवङ्ग वा. (10) D reads समन्वितः. K reads एकैकं तु समन्वितं. (11) त्रिशुल्वं गैरकं चैव, a variant in D. त्रिशुल्वं गैरिकैकं वा, a variant in M. (12) D reads त्रयो दोषा. M reads नवोरताः. Both are incorrect. (13) D has तारभागाश्चतुष्टयम्. K has तारभागचतुष्टयं. (14) K reads मयूरग्रीवं तत्थैव, which is incorrect. This hemistich and the next two are not found in M.

अथवा वङ्गनागांशमेकैकं सुरवन्दिते[1] ।
तीक्ष्णद्वयं त्रिशुल्वं च हेमताप्यचतुष्टयम्[2] ॥ ३९ ॥
यद्वा[3] विमलवैक्रान्तवङ्गनागानि रीतिका[4] ।
सशुल्वाप्यथवा[5] हेम विमलं च भुजङ्गमः ॥ ४० ॥
एषामन्यतमं देवि पूर्व्वकल्पसमन्वितम् ।
अन्धमूषागतं[6] ध्मातं खोटो[7] भवति तत्क्षणात् ॥ ४१ ॥
पुटयेत् पूर्व्वयोगेन रञ्जयेत् पूर्व्वयोगतः ॥ ४२ ॥
नागशुल्वं[8] तथा तीक्ष्णं कापालिकाम[9]मुत्तमम् ।
तेनैव रञ्जयेत्तारं सप्तवारं पुनः पुनः ॥ ४३ ॥
तेनैव रञ्जयेद्धेम सप्तवारं पुनः पुनः ।
पञ्चबीजमिदं[10] श्रेष्ठं सर्व्वकर्म्मसु[11] योजयेत् ॥ ४४ ॥
वङ्गतीक्ष्णं कपाली च[12] शुल्वं तारं तु रञ्जयेत्[13] ।
रञ्जयेत् सर्व्वलोहानि यावत् कुङ्कुमसन्निभम् ॥ ४५ ॥

---

(1) D reads सुरसुन्दरि. (2) This charana and the next two are not found in K. (3) B reads तारं. (4) विमलवैक्रान्तं वङ्गनागामृतीयकाः, a variant in D. (5) B reads सप्तशुल्वाथवा. M reads सशुल्वास्त्वथवा. (6) D and K read अंधमूषागतं, which is not correct. (7) M reads खोटो. (8) B reads नागं शुल्वं. (9) K reads erroneously कायाक्रम. M reads कापालीक्रम. (10) M reads सत्वबीज-मिदं. (11) B and K read सर्वकर्मणि. D reads सर्वकर्माणि. (12) वंगतीक्ष्णकपाली तु, a variant in B. वङ्गं तीक्ष्णं कपालिं च, a variant in D. वंगं तीक्ष्णाभ्रकं वाली तु, a variant in M. (13) D has शुल्वतारं तु योजयेत्. M reads शुद्धतारं तु रञ्जयेत्.

वैक्रान्तं नागकापाली[1] शुद्धतारं तु रञ्जयेत्[2] ।
रञ्जयेत् सह हेम्ना तु[3] भवेत्[4] कुङ्कुमसन्निभम् ॥ ४६ ॥
रक्ततैल[5]निषिक्तं तु लोह[6]संक्रान्तिनाशनम् ।
आरकापालिचूर्णन्तु शुद्धतारं तु रञ्जयेत्[7] ॥ ४७ ॥
विमलेन च नागेन[8] कापाली परमेश्वरी ।
रञ्जयेत् सर्व्वलोहानि तारं हेम विशेषतः ॥ ४८ ॥
रञ्जयेत् त्रीणि वाराणि[9] जायते हेम शोभनम् ।
तेनैव रञ्जयेद्धेम[10] सप्तवारं पुनः पुनः ॥ ४९ ॥
लवणोद[11]निषिक्तन्तु लोहसंक्रान्तिनाशनम् ।
वङ्गनागं[12] तथा कान्तं शुल्वं तीक्ष्णं च माक्षिकम्[13] ॥५०॥
रविनागं कपाली तु[14] शुद्धतारन्तु रञ्जयेत् ।
रञ्जयेत् त्रीणि वाराणि[15] तारारिष्टं तु जायते ।
तेनैव रञ्जयेद्धेम[16] सप्तवाराणि[17] पार्व्वति ॥ ५१ ॥

---

(1) This hemistich and the next one are not found in B. D reads नागकापालिं. M reads नागकापालं. (2) D has योजयेत्, which seems to be incorrect. (3) M reads सितहेमनु. (4) K reads यावत्. (5) D has रक्ततैले. (6) D reads लोहं. (7) This hemistich is not found in D and M. (8) विमूलेन च भागेन, an incorrect variant in D. (9) This is grammatically incorrect, yet found in all the texts. (10) तथा वैहकरीहेम, an incorrect variant in B. (11) B reads लवणाद्व. (12) B reads वंगं नागं. (13) लाक्ष्णी तीक्ष्णमाक्षिकम्, a variant in D. (14) रविं नागकपालिं च, a variant in D. (15) This is grammatically incorrect. (16) B reads जायते हेम. (17) This is grammatically incorrect.

रक्तवर्गनिषिक्तं च लोहसंक्रान्तिनाशनम्।
वङ्गनागं[1] तथा शुल्वं कापाली[2] सुरवन्दिते ॥ ५२ ॥
गुडेन नीलकाचेन[3] तुल्याम्ललवणेन च।
विषपित्ताम्ल[4]पिष्टेन हन्यात् संक्रान्तिकालिकाम् ॥ ५३ ॥
गैरिकं गन्धकं सूतं तिलतैलेन पेषयेत्।[5]
लेपयेत्तारपत्राणि दत्त्वा शुल्वकपालिकाम् ॥ ५४ ॥
ऊर्ध्वाधस्त्वन्धमूषायां[6] शुभ्रं[7] हेमदलं भवेत् ॥ ५५ ॥
भागैकं हरितालस्य भागैकं गैरिकस्य च[8]।
माक्षिक[9]कल्कभागैकं चत्वारो गोलकस्य च।
अन्धमूषागतं ध्मातं हेम रञ्जयति क्षणात् ॥ ५६ ॥
अनेन क्रमयोगेण चतुर्वारं तु रञ्जयेत्।
पद्मबीजमिदं श्रेष्ठं बालार्कसदृशप्रभम् ॥ ५७ ॥
तेन वर्णद्वयोत्कर्षः षोडशांशेन जायते ॥ ५८ ॥
रक्ततैले निषिक्तं च लोहसंक्रान्तिनाशनम्।

---

(1) D and K read वङ्गं नाग. (2) D reads कपालि, which is incorrect. (3) गुडेन पीतकचैव, a variant in B. गुलेन तिलकाचेन, a variant in K. विडि च गर्ये यवकाचेन, an incorrect variant in M. (4) B reads विषसिद्धार्थ. This hemistich and the next one are not found in D. (5) Here ends the MS. M. in the middle part of the 16th Patala. (6) ऊर्ध्वाधर्षांधमूषायां, a variant in B. D and K read मूखायां, which is incorrect. (7) K reads शभ, which is incorrect. (8) B has an incomplete charana—भा गैरिकस्य च. (9) B and K read माक्षिकं.

रसकस्य तु कापाली[1] चन्द्रार्कं तु शतांशत:[2] ।
अन्धमूषागतं ध्मातं शोभनं हेम जायते ॥ ५९ ॥
शुद्धनागपलैकं तु कर्षैकं द्रुतसूतकम्[3] ।
सारयेत् सारणायन्त्रे खोटो भवति सूतक: ॥ ६० ॥
खोटस्य पलमेकं तु माक्षिकस्य पलं तथा ।
एकीकृत्याथ संमर्द्य कनकस्य रसेन च ।
पाचयेन्मृण्मये पात्रे[4] भवेत् कुङ्कुमसन्निभम्[5] ॥ ६१ ॥
पूर्व्वकल्केन संयुक्तं खोटं कुर्वीत पूर्व्ववत्[6] ।
एतत् कापालिकायोगात्[7] चूर्णमम्लेन[8] मर्द्दयेत् ॥ ६२ ॥
पुटयेत् पूर्व्वयोगेन रञ्जयेत् पूर्व्वयोगत: ॥ ६३ ॥
येन केन[9] रसं बद्धा हेमगन्धशिलोरगै: ।
क्रमेण वेष्टितं ध्मातं शतवाराणि[10] वेधयेत् ॥ ६४ ॥
आदौ[11] तु बद्धसूतं च वङ्गं[12] तारं मन:शिला ।
क्रमेण वेष्टयेत् ध्मातं शतवेधो न संशय: ॥ ६५ ॥

---

(1) B reads कपालौ. K reads कापालि. (2) D reads शतांशयो:. K reads शताशत. (3) This charana and the next one are not found in K. (4) B reads भाण्डे. (5) भवेत कंकसंनिभ, a variant in B. (6) B reads पूर्ववत्. (7) एतत् कापालिकं चूर्णं, a variant in B. D reads कपालिकायोगात्. (8) B reads मध्यमाम्लेन. (9) K reads तोमकेन, which is an error of the scribe. (10) B reads दश-वाराणि. D reads शतं वाराणि. (11) This hemistich and the next two are not found in D. K reads आपौ, which is incorrect. (12) K reads वत्र, which is incorrect.

अनेन कुरुते तारं कनकेन तु काञ्चनम् ॥ ६६ ॥

सूतो मृतो हन्ति समेन वङ्गं[1]
तेनैव हन्यात्[2] द्विगुणं च तारम्[3] ।
तारं चतुःषष्टिरविं करोति
हेमापि तद्वत् फणिहेमयोगात्[4] ॥ ६७ ॥

मृतरसपलमेकं[5] पञ्चनागं च दद्यात्
कनकपलविमिश्रं[6] जातसूतावशेषम्[7] ।
पुनरपि शतवारानेवमेव[8] क्रमेण
भवति च[9] रसराजः कोटिवेधी क्रमेण ॥ ६८ ॥

मृतसूतपलैकं तु[10] द्वे पले[11] दरदस्य च ।
चतुःपलं गन्धकस्य काङ्कुष्ठस्य[12] पलत्रयम् ।
शिलायाः पञ्चकं चैव गोपित्तेन तु मर्दयेत् ॥ ६९ ॥

---

(1) D has an absurd charana—पादो चतुर्थे सूतेन मृतं हेति समेन तं वङ्गं. (2) B reads वंग. (3) तेनैव गावषि गुड़ं च तारं, an incorrect variant in D. (4) K has शंखेंदुकुंदमतीनं मनोहरं हेम गोपात्, which is absurd. (5) D wants पल ; hence it reads मृतरसमेकं, which mars the metre as well as the sense. (6) B reads कनकपलं विमिश्रं, which destroys the metre as well as the grammar and sense. (7) D reads जातं सूतावशेषं, which mars the metre. (8) शतवारानिष्कमेकं, a variant in D. शतवारं निष्कमेव, a variant in K. (9) D has only भवति, which makes the charana an incomplete one. K reads स भवति. (10) D has मृतसूतं पलैकं तु. (11) D reads द्विपल. K reads पलैकं. (12) B reads कुंकुमस्य.

पलैकनागपत्राणि[1] तेन कल्केन[2] लेपयेत् ।
मारयेत् पुटयोगेन नागोऽयं म्रियते[3] क्षणात् ॥ ७० ॥
वटिकां कारयेत्पश्चात् षष्टिं त्रीणि शतानि च ।
एकैकां वटिकां पश्चान्नेपित्तेन तु मर्द्दयेत् ॥ ७१ ॥
अनेन क्रमयोगेण शतं दद्यात् पुटानि च[4] ।
नागोऽयं जायते देवि सिन्दूरारुणसन्निभः[5] ॥ ७२ ॥
शतांशेन च तेनैव[6] तारे वेधं[7] प्रदापयेत् ।
तत्तारं जायते देवि देवाभरणमुत्तमम्[8] ॥ ७३ ॥
मृतनागपलैकं तु[9] हेमपत्रं तु तत्समम् ।
मारयेत् पुटयोगेन म्रियते हेम[10] तत्क्षणात् ॥ ७४ ॥
तद्भस्मनागैकयुतं[11] हेमपत्रं तु तत्समम् ।
मारयेत् पुटयोगेन म्रियते हेम तत्क्षणात् ॥ ७५ ॥
अनेन क्रमयोगेण त्रीणि वाराणि[12] कारयेत् ।
सहस्रांशेन तेनैव तारे वेधं[13] प्रदापयेत् ॥ ७६ ॥

---

(1) This hemistich and the next one are put in B after the 71st śloka. पलैकं नागपत्राणि, a variant in K. (2) D has तिलकल्केन. (3) D reads मयते, which is grammatically incorrect. (4) शतं दद्यात् पुटं प्रिये, a variant in B. (5) B reads सप्रभः. K reads संप्रभः. (6) D reads तेलेन. (7) D reads तारवेधं. (8) B reads देवाभरणभूषणं. This hemistich is not found in D. (9) मृतनागं पलैकन्तु, a variant in D. (10) D reads देवि, which is not accurate. K reads क्षीयते, which is incorrect. (11) तद्भस्मभागैकयुतं, a variant in B. D and K read युक्तं. (12) This is grammatically incorrect. (13) D reads तारवेध.

सुखसाध्यप्रयोगेन[1] तत्तारं कनकं भवेत्।
कल्कवेधमतो वक्ष्ये[2] सुखसाध्यं सुरेश्वरि ॥ ७७ ॥
पलाशनिम्बविल्वाख्य-कार्पासकटुतुम्बिनी।
कङ्गुणीकटुतैलं च[3] एकैकं रसमारकम्[4] ॥ ७८ ॥
समे हेम्नि समं सूतं[5] तारं ताम्रमथापि वा[6]।
महारसाष्टमध्ये तु चत्वारोपरसास्तथा[7] ॥ ७९ ॥
फलाम्लकाञ्जिकैर्मध्य[8]-निरङ्गारे तु[9] खल्लयेत्।
तप्तायसेऽथवा लोह[10]-मुष्टिना मृदुवह्निना ॥ ८० ॥
प्रागुक्त[11]वालुकायन्त्रे तैलं दत्त्वा विचक्षणः।
मर्द्दयेत् पञ्चमैकं तु[12] दिवारात्रमतन्द्रितः ॥ ८१ ॥
तत्कल्कं जायते श्रेष्ठं धर्म्मकामार्थमोक्षदम्।
वेधयेदष्टलोहानि देवानामपि दुर्ल्लभम् ॥ ८२ ॥
नाशयेत् सकलान् रोगान् पलैकेन न संशयः।
त्रिकटुत्रिफलायुक्तं मध्वाज्येन तु भक्षयेत् ॥ ८३ ॥

(1) This charana is wanting in B. This hemistich is not found in D. (2) B reads ततो वक्षे. D reads कल्के वेधमतो. K reads कल्क-वङ्गमतो लक्ष्ये, which is incorrect. (3) कंगुणी कटुज तैल, a variant in D. (4) B reads रसमारणं. (5) B has समे सूत, which is incorrect. (6) तार ताम्रं तथापि वा, a variant in D. (7) चत्वार उपरसास्तथा is the correct grammatical form. (8) B reads फलाम्लं कांजिकैर्मध्वा. D reads मूत्रा, which seems to be incorrect. (9) B has निवङ्गारे तु. D has निरयं ये तु, which is unintelligible. (10) तप्तादायसेऽथवा लोहे, a variant in D. (11) D reads प्रयुक्त. (12) B reads च.

छित्वा तु बद्धं गुञ्जैकं[1] तारेण हे[2] सुरेश्वरि ।
ताम्रेण गुञ्जात्रितयं[3] वर्णात् स्यादजरामरः ॥ ८४ ॥
सेवन्ते चन्द्रवदनाः सर्व्वाभरणभूषिताः ।
त्रिफलाबीजमध्यारूयं नस्यं क्षत्वा निशासु च[4] ॥ ८५ ॥
एवं तु[5] भक्षयेत् प्रातरजीर्णं नैव जायते ।
गन्धकं पानमालेपं[6] काकुष्ठं भक्षयेद्बुधः ॥ ८६ ॥
पलेन[7] भक्षयेत् सूतं सुरासुरनमस्कृतम्[8] ।
तप्तहेमनिभाकारो बालार्कसदृशप्रभः ॥ ८७ ॥
वेधयेत् सर्व्वलोहानि छेदे दाहे[9] न संशयः ।
बद्धा तु संकलाबन्धे[10]र्वटिका[11] खेचरी भवेत् ॥ ८८ ॥
काकजङ्घा च बृहती शरपुङ्खाजशृङ्गिके[12] ।
शिवा[13] शक्रलता[14] कन्या समेतास्तु[15] महालताः ॥ ८९ ॥

---

(1) छिन्नस्तु पलगुञ्जैक, a variant in D. K reads फलगुञ्जैकं. (2) D reads तारेणार्धे. K reads तारेणार्धं. (3) D has गुञ्जात्रितये. (4) निशातपुनः is the incorrect reading in D. (5) K reads एवं तु, which is incorrect. (6) गन्धकेनाथ मालिप्य, a variant in D. (7) K reads पलेन. (8) K has an incomplete charana—सुरनमस्कृत. (9) D reads छेददाहे. This hemistich is not found in K. (10) B reads बद्धस्तु, which is incorrect. बद्धा कम्पिकलाविधैः, a variant in D. बद्धास्तु संकलाबुधैः, a variant in K. (11) B reads घुटिका. (12) शुक्तिपुंखाचभृंगिके, a variant in B. शरपुङ्खाजभृङ्गिका, a variant in D. सुरपुंखाजशृंगिका, a variant in K. (13) B has शिखा. D has शिवं. K has शिव, which seems to be incorrect. (14) B reads शर्कलता. D reads शक्रलतां, which is incorrect. (15) समैते तु महाबलाः, a variant in B. समैते तु महालता, a variant in D समेतास्तु महालताः, a variant in K.

गुडाहुकं समाख्यातं वातारिबीजसंयुतम् ।
समे हेम्नि समं सूतं[1] तारे ताम्रेऽथवा प्रिये ॥ ८० ॥
महारसाष्टमध्येकं दद्यात्तूपरसांस्तथा[2] ।
मर्द्दयेत् खल्लपाषाणे[3] यावन्निश्चेतनं भवेत् ॥ ८१ ॥
स्वेदयेदारनालेन[4] मर्द्दयेत् पूर्व्वकल्कवत् ।
तच्च लोहस्य देहस्य तत्तत्कर्म्मसु[5] योजयेत् ॥ ८२ ॥
हेमाभ्रकस्य चैकैकं सूतकस्य द्वयं तथा[6] ।
ताराभ्रकस्य चैकैकं सूतकस्य द्वयं तथा[7] ॥ ८३ ॥
पिष्टिकां कारयेत्तेन निगलेन च बन्धयेत् ।
पुटेषु पिष्टिकाबन्धो[8] गोलेन निगलेन च[9] ॥ ८४ ॥
पुनरन्यं प्रवक्ष्यामि चूर्णबन्धं सुरेश्वरि[10] ॥ ८५ ॥
पिष्टिकां[11] टङ्कणं दत्त्वा द्विपदीरस[12]मर्द्दितम् ।
नष्टपिष्टं च शुष्कं तत्[13] धामयित्वा पुटे[14] पचेत् ॥ ८६ ॥

---

(1) B reads समे सूते. (2) दद्यादुपरसांस्तथा, a variant in B. (3) D reads खल्लु पाषाणे. (4) D and K read स्वेदयेदारनालेन. (5) B reads तच्च कर्मसु. D reads तत: कर्मसु. (6) D reads सूतकस्याद्रसे तथा, which seems to be incorrect. (7) This hemistich is not found in D. K reads सूतकं त्रितयं तथा. (8) All the texts have पिष्टिकाबन्धौ, which seems to be incorrect. (9) B reads वा. After this we find the following in B only—इति पिष्टिकाबंध: । (10) D has चूर्णबन्धं सुरेश्वरी, which is incorrect. (11) B reads पीठिकां. (12) B has त्रिपदीरस. (13) नष्टं पिष्टं च शुष्कं तत्, a variant in B. नष्टं पिष्टं च शुष्कं च, a variant in D. (14) B reads रंजयित्वा पुटे. D and K read पुटं.

वेष्टयेद्देवदेवेशि गोलेन निगलेन च[1] ।
तुषकर्षाग्निना भूमौ मृदुस्वेदं तु कारयेत् ॥ ९७ ॥
अहोरात्रं त्रिरात्रं वा चूर्णं भवति शोभनम् ।
बद्धसंकलिकाभावात्[2] भवेद्वेधा तु वेधकम्[3] ॥ ९८ ॥
पुनरन्यं प्रवक्ष्यामि पट्टबन्धं[4] सुदुर्लभम् ॥ ९९ ॥
कासीसं[5] टङ्कणं क्षारं सैन्धवं गन्धमभ्रकम्[6] ।
सूतकं[7] मातुलुङ्गेन मर्द्दितं पुटवेधकम्[8] ॥ १०० ॥
वङ्गताराभ्ररसकं[9]-स्नुक्क्षीरकृतगोलकम्[10] ।
वेष्टयेद्भूर्जपत्रेण वस्त्रसूत्रेण[11] वेष्टयेत् ॥ १०१ ॥
ऊर्द्ध्वाधो[12] गोमयं दत्त्वा भूमध्ये स्वेदयेत्ततः ।
मर्द्दनं स्वेदनं कुर्यात्त्रिवारानेवमेव च[13] ॥ १०२ ॥
लेपयेद्दग्धधर्म्माञ्च[14] मर्द्दयेद्गुडकाञ्जिकैः ।
धत्तूररससलिमायां मूषायां[15] संनिवेशयेत् ॥ १०३ ॥

---

(1) B reads वा. (2) B reads योगात्. (3) After this we find in K only the following incomplete śloka :—गंघताराभ्रसंयुक्तं स्नुही-क्षीरेण तालकं । वेष्टयेत् भूर्जपत्रेण..., which is found afterwards in B and D. (4) K reads पटबंध. (5) D and K read कौशीसं. (6) D reads गन्धव्राभकम्, which seems to be incorrect. (7) D wants सूतकं. (8) तस्य हे पुनर्वेधकम्, an absurd variant in D. K reads पटवधकं. (9) D and K read वंगताराभ्रसंयुक्तं. (10) D and K read स्नुहीक्षीरेण ताल-कम्. (11) D reads वस्त्रं सूत्रेण. (12) D reads ऊर्ध्वं, which renders the charaṇa incomplete. (13) क्षौषि वाराणि सुन्दरि, a variant in D. त्रिषि वारांस्तथैव च, an incorrect variant in K. (14) D reads दृग्धघर्माञ्च. K wants this. (15) B wants this.

बद्धा मूषामुखं[1] देवि सन्धिलेपं तु कारयेत् ।
लोणमध्ये क्षिपेन्मूषां बृहन्मूषां च[2] शास्त्रतः ॥ १०४ ॥
मुखं तस्याश्च मूषाया बद्धा लोणमृदा ततः ।
तुषकर्षाग्निना भूमौ मृदुस्वेदं तु[3] कारयेत् ॥ १०५ ॥
अहोरात्रं त्रिरात्रं वा चित्रधर्म्मा भवन्ति ते[4] ।
अनेनैव प्रकारेण सप्तवारं[5] तु कारयेत् ॥ १०६ ॥
अन्तर्बहिश्च बद्धास्ते[6] धर्म्मशुद्धा भवन्ति ते ॥ १०७ ॥
गन्धकेन हतं सूतं कांचीकासीससैन्धवम्[7] ।
शुल्वार्कं टङ्कणं गुञ्जा रविक्षीरेण मर्द्दिताः[8] ।
पुराणका भवन्त्याशु[9] धर्म्मकामार्थमोक्षदाः ॥ १०८ ॥
पञ्चभागं तु शुल्वस्य द्विभागं कुञ्जरस्य च ।
कारयेद्दलधर्म्मांश्च[10] लेपयेत् पूर्व्वयोगतः ॥ १०९ ॥
रसेन्द्रो रञ्जति[11] ह्येवं कर्त्तव्यं सारणादिकम् ।
तत्समाचक्ष्व देवेशि किमन्यच्छ्रोतुमिच्छसि ॥ ११० ॥

---

(1) D reads मूषागतं, which is incorrect. (2) K reads बृहन्मूषा च, which is incorrect. (3) D reads च. (4) B reads तु. D reads चित्रधर्मा भवन्ति ते. K reads चित्रधर्मा भवंति हि. (5) D has वारं वारं. (6) B reads बिडास्ते. D reads बध्वाते, which is incorrect. (7) D and K have कांजिकौषधसैंधवं. (8) D and K read मर्दयेत्, which seems to be improper here. (9) पुराणार्कभयोत्थाश्च, a variant in D. पुराणका भयोत्थाश्च, a variant in K. Both seem to be incorrect. (10) कारयेद्वलधर्मांश्च, a variant in D and K. (11) B reads रंजते. K reads रंजिते, which is incorrect.

इति श्रीपार्व्वतीपरमेश्वरसंवादे[1]

रसार्णवे रससंहितायां

रसरञ्जनो नाम[2]

षोड़शः पटलः ॥ १६ ॥

---

(1) B wants this portion. (2) B and D read रञ्जनो नाम. In the beginning of this Patala, the Goddess asks the ज्ञापन of रस to be explained and not रञ्जन ; the latter being the final subject.

## सप्तदशः पटलः ।



श्रीदेव्युवाच ।

द्रावणं रञ्जनं चैव पारदस्य श्रुतं मया ।
सारणं क्रामणं चैव क्रमादाख्यातुमर्हसि[1] ॥ १ ॥

श्रीभैरव उवाच ।

मूषां तु गोस्तनीं कृत्वा धत्तूरकुसुमाकृतिम्[2] ।
तदर्धं[3] पूरयेत्तैलं रञ्जितं च रसं क्षिपेत् ॥ २ ॥
तुषकर्षाग्निना वाह्ये मूषायास्तु[4] प्रदापयेत् ।
विंशांश[5]नागसंयुक्तं समावर्त्तं च खोटकम् ।
दीर्घसंदंशनेनैव[6] प्रक्षिपेत् सारितं भवेत् ॥ ३ ॥
द्विगुणेन ततो[7] हेम्ना जायते प्रतिसारितम् ।
ततस्त्रिगुणहेम्ना तु[8] जायते चानुसारितम्[9] ॥ ४ ॥

---

(1) D has an incorrect variant क्रमरञ्जतुमर्हसि. (2) D and K have धत्तूरकुसुमाकृतिः, which is grammatically incorrect. (3) All the texts read तस्यार्धं, which is grammatically incorrect. D has an incorrect variant—तस्यर्धं तैले पचेत्. (4) B reads मूषायां तु. D and K read मूखायास्तु, which is incorrect. (5) D reads विंशांशं. (6) B has दीर्घं संदशंनं नेव. D and K have दीर्घसंदर्शनेनैव. (7) D reads क्तो, which is not correct. (8) B reads ततस्त्रिगुणं हेम्ना तु. This hemistich and the next two are not found in D. K reads ततस्त्रीगुण हेम्ना तु, which is incorrect. (9) B has चानुसारणा. K has मानुसारितः, which is incorrect.

जारयेद्विड़योगेन[1] ग्रासयासाथ पुनः पुनः ।
अनेन विधिना देवि भवेद्देधा तु[2] वेधकः ॥ ५ ॥
भूलताशोणितशिला[3]-विषटङ्कणपारदम् ।
ताप्यं स्त्रीस्तन्यसंपिष्टं क्रामणं क्षेपलेपयोः[4] ॥ ६ ॥
इन्द्रगोपो[5] विषं कान्तं दरदं[6] रुधिरं तथा ।
रसकं तिलतैलं च क्रामणं क्षेपलेपयोः ॥ ७ ॥
भूलता माक्षिक[7]शिला-टङ्कणं रुधिरं विषम् ।
काकविष्ठा स्तनक्षीरं[8] महिषीकर्णयोर्मलः[9] ।
रामठं च मद्दैशानि क्रामणं क्षेपलेपयोः[10] ॥ ८ ॥
भूलता लाङ्गली शृङ्गी काकविष्ठा च शैलजम् ।
विष्णुक्रान्ता मधूच्छिष्टं[11] रुधिरं द्विपदीरजः ॥ ९ ॥
सुरसा ब्रह्मसोमा च रुदन्तीकर्णी च लक्षणा[12] ।
कर्णगं महिषस्यापि[13] क्रामणं क्षेपलेपयोः ॥ १० ॥

---

(1) ज्वालयेद्विजयोगेन, a variant in K, which seems to be incorrect. (2) B reads नु. (3) D reads शोणितं शिला. K reads शोणितः शिला. (4) D and K have क्षेपलेपयेत्, which is incorrect. (5) D reads इन्द्रगोप, which is incorrect. (6) K reads सुदरं. (7) D reads माक्षिकं. (8) D reads स्तन्यक्षीरं, which mars the metre. (9) महिषीकर्णजं मलं, a variant in D. (10) K reads erroneously क्षेप-लेपयेत्. (11) भूलतावीजकांतं च, an incorrect variant in B. (12) रुदन्तवर्णा विलक्षणः, a variant in D. रुदन्तवर्णं च लक्षणा, a variant in K. (13) कर्णजीनाहिषस्यापि, a variant in B. कर्णागरागहिषस्यापि, a variant in D. कर्णजंमहिषास्यापि, a variant in K. The sense of all of them is not clear.

गण्डोल[1] विषभेकास्य-मक्षिषाक्षिमलं तथा[2] ।
रुधिरेण समायुक्तं रससंक्रामणं परम् ॥ ११ ॥
विषं सुरेन्द्रगोपश्च[3] रोचना गुग्गुलुस्तथा ।
स्त्रीस्तन्यं[4] चैव तैर्युक्तो लोहे तु क्रमते[5] रसः ॥ १२ ॥
श्रीखण्ड[6]निम्बनिर्य्यास-स्त्रीस्तन्यविषटङ्कणैः ।
गोमूत्रेण समायुक्तो लोहे तु क्रमते रसः ॥ १३ ॥
अरिवर्गहतौ[7] वङ्ग-नागौ द्वौ क्रामणं[8] परम् ॥ १४ ॥
मालवाक्षः[9] कुलीरश्च शङ्खाभ्यन्तरजो मलः ।
तथा कपित्थनिर्य्यासो[10] रससंक्रामणं परम् ॥ १५ ॥
क्रामणं रसराजस्य वेधकाले प्रदापयेत् ।
क्रामणं यो न जानाति श्रमस्तस्य निरर्थकः ॥ १६ ॥
अतः परं प्रवक्ष्यामि हेमतारदलानि तु ॥ १७ ॥
नागं सूतं समं घृष्टं गन्धद्वादशसंयुतम्[11] ।
धत्तूरकरसे घृष्टा गुटिका[12] चणकाकृतिः ॥ १८ ॥

---

(1) D reads गण्डस्ले, which is incorrect. (2) मक्षिषाक्षीमलं तथा, a variant in B. मक्षीमाक्षीमलं तथा, a variant in K. (3) B and K read विषसुतेंद्रगोपाश्च. (4) K reads स्त्रीस्तन्ये, which is inaccurate. (5) D reads क्रमणो. K reads क्रमतो. (6) B has स्त्रीवीज. D and K have श्रीखंडं. (7) D reads अरिवर्गाहतौ, which seems to be incorrect. (8) D has क्रमणं, which is incorrect. (9) D reads श्रीमाक्षिवाक्षः, which is incorrect. (10) B reads निर्यासै, which is incorrect. (11) गन्धकै द्वादशायुतम्, a variant in D. (12) B has घृष्टगुटिका. K has धत्तूरकरसैः.

तारस्य भागाश्चत्वारः[1] शुल्वभागास्त्रयस्तथा[2] ।
सम्यगावर्त्य देवेशि गुटिकेकां[3] तु निक्षिपेत् ॥ १९ ॥
अनेन क्रमयोगेण तारे ताम्रं[4] तु वाहयेत् ।
यावत्तु जायते रक्तं तारं चैव न संशयः ॥ २० ॥
अस्य भागद्वयं ग्राह्यं तारस्य भागपञ्चकम्[5] ।
हेमभागैकसंयुक्तं द्रुतं[6] हेमाष्टकं भवेत् ॥ २१ ॥
गन्धकेन हतं शुल्वं दरदेन समन्वितम् ।
आर्द्रकं मूलकं शुण्ठी लसुनं हिङ्गु माक्षिकम् ॥ २२ ॥
मर्दयेन्मातुलुङ्गेन[7] नागपत्राणि लेपयेत् ।
पुटेन म्रियते नागः सिन्दूरारुणसन्निभः[8] ॥ २३ ॥
तत्तारे त्रिगुणे व्यूढं[9] निर्वीजं कनकं भवेत् ॥ २४ ॥
गन्धपाषाणदरद-तीक्ष्णखर्परसूतकैः[10] ।
भागवृद्धैः समध्वाज्यैः[11] पञ्चमांशेन लेपयेत् ॥ २५ ॥
पुटनाच्छुष्कपुटनात्[12] द्विधा तारस्य कृष्णता[13] ॥ २६ ॥

---

(1) D reads चत्वारि, which is incorrect. (2) D reads शुल्व-भागास्त्रयं तथा, which is incorrect. (3) D and K read गुटिकैका. (4) D and K read तारे ताम्रं. (5) B has तारभागस्य पंचकं. (6) D reads हृतं, which is incorrect. (7) K reads मातुलिंगेन. (8) B and D read सप्रभः. (9) B reads व्यूढः. D reads व्यूढे. K reads ततसूते. (10) D reads सूतकाः, which is grammatically incorrect. K reads पाषाण in place of खर्पर. (11) B reads erroneously समध्वाज्ये. B reads भागवृद्धैः. (12) पुटेन तच्छुष्कपुटनात्, a variant in D. पुटयेत् शुष्कपुटनात्, a variant in K. (13) द्विधा नयस्पसक्षता, an incorrect variant in D.

पीतगन्धकपालाग्र-निर्य्यासेन प्रलेपितम् ।
पुटत्रयप्रदानेन[1] रजतं काञ्चनं भवेत् ॥ २७ ॥
पीतकृष्णाभ्रगन्धं[2] यथालाभं सुचूर्णितम् ।
गोसर्पिर्भावितं तारे[3] वापेन श्वेतनाशनम्[4] ॥ २८ ॥
रक्तपीतासितगन्धं[5] छागक्षीरेण भूयसा ।
सप्ताहं स्नापयेत्तारे[6] निषेकाद्वर्णवर्धनम्[7] ॥ २९ ॥
यदा वाप[8]निषेकाभ्यां मार्जारनयनप्रभम् ।
तत्तारं द्वसंप्रोक्तं[9] मेलनं परमं मतम् ॥ ३० ॥
शुल्वस्य[10] कांस्यकृष्णं तु रसकेन तु रञ्जयेत् ।
द्वौ भागौ तस्य शुल्वस्य तारस्यैकं च मेलयेत् ॥ ३१ ॥
तदा तस्य रसेन्द्रस्य मेलनं परमं मतम् ।
वेधयेत् शुद्धसूतेन[11] शतांशेन सुरेश्वरि ॥ ३२ ॥
हेममाक्षिकलवणं[12] पेषयेन्मधुसर्पिषा ।

---

(1) पुटत्रयं प्रयत्नेन, a variant in B, which seems to be incorrect. (2) D reads गतं instead of गन्धं. This charana and the next five are not found in K. (3) गोसर्पिर्भावितातारं, a variant in B. (4) D has वापने श्वेतनाशनी, which has no clear sense. (5) B reads सितगन्धं, which is evidently an error of the scribe. (6) B reads erroneously स्नापयेत्तरे. (7) निषेकाद्वर्ण वर्धनं, a variant in D, which is partly incorrect. (8) D reads incompletely यथा-सं. K reads यथा वाप्य, which is not correct. (9) D and K read तदा तस्य रसेन्द्रस्य, which seems to be improper. (10) B reads शुल्वं तु. D reads शुल्वेन तु, which is incorrect. (11) B reads सिद्धसूतेन. (12) B reads हेम-माक्षिकचोषं च.

कुङ्कुमाभं भवेद्यावत् तेन नागपुटे[1] पचेत् ॥ १३ ॥
समं शुल्वं[2] ततो देयं तच्छुल्वं तारपत्रके[3] ।
त्रिवारं शोधयेद्दत्वा शुद्धं हेमदलं भवेत् ॥ १४ ॥
वङ्गं नागं तथा[4] तीक्ष्णं शुल्वं तारं च पञ्चकम्[5] ।
त्रिवारं शोधयेद्दत्वा शुद्धं हेमदलं भवेत्[6] ॥ १५ ॥
तालकं गन्धपाषाणं[7] माक्षिकं खर्परं[8] विषम् ।
मातुलुङ्गयुतं[9] लिप्ता वङ्गलोहं पुटे पचेत्[10] ॥ १६ ॥
दरदं गन्धपाषाणं माक्षिकं सैन्धवं विषम् ।
मातुलुङ्गयुतं लिप्ता तीक्ष्णलोहं[11] पुटे पचेत्[12] ॥ १७ ॥
कुनटी गन्धपाषाणं माक्षिकं सैन्धवं विषम् ।
मातुलुङ्गयुतं लिप्ता नागलोहं पुटे पचेत्[13] ॥ १८ ॥
सर्व्वं हेमदले वाह्यं[14] हेम वङ्गेन[15] वेधयेत् ॥ १९ ॥

---

(1) D has तेषां नागपुटं K has तेन नागपुटं. (2) B reads समशुल्वं. (3) B and K read तारपंचके, which seems to be incorrect. (4) K wants तथा. (5) This hemistich and the next one are not found in D. (6) This hemistich is not found in K. (7) D reads हेमपाषाणं. (8) B reads खर्परी. (9) K reads मातुलिंगयुतं. (10) D reads पुटं भवेत्, which seems to be incorrect. (11) K reads वंगलोहं. (12) After this śloka we find a śloka in B, which is a repitition of the 36th, having नागलोहं in place of वङ्गलोहं. (13) This śloka is not found in D. In K we see only the word कुनटी. (14) B reads वाह्यः. D reads सर्वं हेमदलो, which seems to be incorrect. (15) B reads हेम चापेन.

तुल्यांशौ हेमकरिणौ[1] तीक्ष्णं द्विगुणमेव च[2] ।
व्यूढं रक्तगणैः सिक्तं[3] तत्सारं कनकं भवेत् ॥ ४० ॥
शुल्वं ताप्यहतं[4] कृत्वा वरनागं[5] तु रञ्जयेत् ।
तं नागं वाहयेत्तारे यावद्धेमदलं[6] भवेत् ॥ ४१ ॥
विषं सूतसमं गन्धं[7] त्रिगुणाञ्जनसंयुतम्[8] ।
अम्लेन त्रिदिनं[9] पिष्ट्वा ताराकौँ मेलयेत् समौ[10] ॥ ४२ ॥
पक्वं पञ्चमृदा चैव[11] पुटेत्तारावशेषितम् ।
एवं वारत्रयेणैव रञ्जयेत्तारमुत्तमम् ॥ ४३ ॥
भुजङ्गस्य[12] च शुल्वस्य पृथगंश[13]चतुष्टयम् ।
पृथग्द्वादशतैलस्य[14] रीतिकातारयोर्द्वयोः[15] ॥ ४४ ॥

---

(1) B reads तुल्यांशौ, which is incorrect. K reads erroneously हेमकणौ. (2) D has तीक्ष्ण त्रिगुणं भवेत्. (3) B reads रक्तगणैः. D reads शिक्ये, which is incorrect. (4) B has शुल्वताप्य हतं. (5) D reads तारेणोगें, which is unintelligible. (6) D has यावद्यासिदलं, which is incorrect. (7) विषं सूतं समं गंध, a variant in B and K. विषसूतसमं गन्धं, a variant in D. (8) B has त्रिगुण ञ्जनसंयुत. D reads erroneously त्रिगुणं येन संयुतम्. (9) D reads त्रिगुण, which is evidently an error. (10) ताराकं मेलयेत् समम्, a variant in B. नाकं मिश्रय तत्समम्, an incorrect variant in D. (11) D has पूर्ववदमृता चैव, which is partly correct. K has पक्वं पंचदमृता चैव, which is incorrect. (12) B reads भुजगस्य. (13) D and K read पृथगस्य. (14) पृथग्द्वादशतोल्लास्य, an incorrect reading in B. पथ्यङ्गद्वादशतैलस्य, a variant in D. पृथक्द्वादशलांशस्य, a variant in K. (15) टीतिकांतारयोर्द्वयोः, a reading in B. रीतितारकयोर्द्वयोः, a variant in D. K has an incomplete charana—रीतिकातायोर्द्वयोः.

कनकस्य तु भागैकं हेमताराविशेषितम्[1] ।
मार्ज्जाराक्षिप्रभं देवि वरं हेमदलं भवेत् ॥ ४५ ॥

ताराष्टकं ताम्रचतुष्कभागं[2]
नागद्वयं काञ्चनमेकभागम् ।
सर्व्वं ततो रक्तगणेन सिक्तं
तारावशेषं कनकं करोति ॥ ४६ ॥

राजावर्त्तं चतुर्थं च[3] दरदस्य प्रवालकम् ।
हेममाक्षिकसंयुक्तं समभागानि कारयेत् ॥ ४७ ॥
रसकस्य[4] त्रयो भागा मेषीक्षीरेण[5] मर्द्दयेत् ।
वटिकां कारयेत् पश्चात् छायायां शोषयेत्ततः ॥ ४८ ॥
पञ्चद्रावकसंयुक्तां शिलापट्टेन पेषयेत् ।
अनेन सिद्धकल्केन तारारिष्टं तु योजयेत्[6] ॥ ४९ ॥
प्रथमे[7] समकल्केन द्वितीये तु तदर्धकम् ।
तृतीये पादभागेन तारारिष्टं तु जायते ॥ ५० ॥
पत्रे दाहे कषे च्छेदे[8] हेम तच्छाश्वतं भवेत् ॥ ५१ ॥
सूतकं दरदं ताप्यं गन्धकं कुनटी तथा ।
गृहीत्वा क्रमवृद्ध्या तु शुल्वपत्राणि लेपयेत् ॥ ५२ ॥

---

(1) D reads हेमसमाविशेषितम्, which is not correct. (2) K reads ताम्रचतुष्कभागी. (3) D reads राजावर्त्तचतुर्थं च. (4) K reads कारकस्य, which is incorrect. (5) मजाक्षीरेण in D, which is incorrect. (6) B reads तु जायते. (7) B, D and K read प्रथमं; but this is not accurate. (8) D reads वेदे, which seems to be incorrect.

चाङ्गेरीस्वरसे[1] पिष्ट्वा दापयेत्[2] पुटपञ्चकम् ।
तच्चूर्णं वाहयेत्तारे हेमाकृष्टिरियं[3] भवेत् ॥ ५३ ॥
कनके[4] योजयेद्देवि कृष्णवर्णं भवेत्ततः[5] ॥ ५४ ॥
गोमूत्रेण[6] शिलां पिष्ट्वा शुल्वमावर्त्य[7] सेचयेत् ।
शतधा शोधनेनैव भवेत् काञ्चनतारकम् ॥ ५५ ॥
अथ कांस्योद्धृतं[8] ताम्रमारोटमथवा प्रिये ।
षड्गुणेन तु नागेन[9] शोधयित्वा ततो बुधः[10] ॥ ५६ ॥
शतांशं सिन्धुवारस्य रसमध्ये तु ढालयेत् ।[11]
कुष्माण्डस्य रसे[12] पश्चात् सप्तवारं तु दापयेत् ॥ ५७ ॥
तथा तक्रे शिलायुक्ते तप्ततप्तं च[13] दापयेत् ।
शुकतुण्डकिंशुकाभं छेदे रक्तं मृदुं तथा[14] ॥ ५८ ॥

---

(1) D reads स्वरसे, which is an error of the scribe. (2) K reads चपयेत्, which has no sense. (3) D reads हिमकष्टिरयं, which is incorrect. K reads हेमकृष्टिरिय. (4) B reads कनकेन, which destroys the metre. This hemistich is not found in D. (5) K reads भवेत्तु वा. (6) D reads गोमूत्रे, which mars the metre. (7) D reads शुल्वमावर्तं, which is incorrect. (8) D reads कांस्योद्दतं. K reads कांस्योधनं. Both the readings are incorrect. (9) षड् गुणेन गुणांशेन, a variant in D. (10) B reads ततो नधः, which is incorrect. (11) After this 18 ślokas ( 57—74 ) are wanting in B. (12) D reads कुष्माण्डकरसे. K reads कुष्माण्डस्य रसं, the latter being incorrect. (13) D has पुनस्तथैव. K has तप्ततप्तैव, which is grammatically incorrect. (14) छिदेरक्तमृदईस्तथा, an incorrect variant in D. K reads मृदुस्तथा.

ताप्येन वाप्यं कल्कं तत्[1] शुल्वं कालिकया गतम्[2] ॥ ५८
दरदं किंशुकरसं रक्तचित्रकमेव च ।
हरिद्रे[3] हे वरारोहे छागमूत्रेण पेषयेत् ॥ ६० ॥
दद्यान्निषेचनं[4] शुल्वे सप्तवारं न संशयः ।
शुल्वं सिन्दूरवर्णं च वर्ं[5] हेमदलं भवेत् ॥ ६१ ॥
द्विगुणौ तीक्ष्णभुजगौ घोषकल्कं[6] तु वाहयेत् ।
अथवा यन्त्रकारस्य[7] चैकद्वित्रिपलक्रमात्[8] ॥ ६२ ॥
त्रिपञ्चकं च[9] नागस्य शुल्वस्य च[10] पलं तथा ।
ध्मातं यदवशिष्टं[11] तत् तपनीयनिभं भवेत् ॥ ६३ ॥
लाङ्गली चित्रकं शिग्रुर्निर्गुण्डी करवीरकम् ।
स्नुह्यर्कक्षीरचिञ्चाम्ल-वज्रकन्दसमन्विताम् ।
महिषीक्षीरसंयुक्तां सुरां देवि प्रकल्पयेत्[12] ॥ ६४ ॥
स्नुह्यर्कक्षीरलवणैः शुल्वपत्राणि लेपयेत् ।
सुरायां प्रथमोक्तायां दिनमेकन्तु पाचयेत् ॥ ६५ ॥

---

(1) तापयेद्वतकल्कं तत्, a variant in K, which is incorrect. (2) K reads रतं. (3) K reads हारिद्रे. (4) D reads दद्यान्निरोधनं. (5) D reads वर्णं. (6) K reads घोषाष्टं. (7) K reads पञ्चकारस्य, which has no clear sense. (8) D reads फलाक्रमात्, which is not correct. (9) D has त्रिपञ्चकस्य. (10) D reads शुल्वेन च, which is incorrect. (11) D reads यदावशिष्टं. K reads यथावशिष्टं, which seems to be incorrect. (12) This śloka is not found in D.

प्राग्वन्निर्मान्निवर्णानि[1] सुरायां सेचयेन्मुहुः[2] ।
आवर्त्तितानि बहुधा[3] कुर्य्यात् कुष्ठवराटकैः[4] ॥ ६६ ॥
सर्ज्जिका[5]सिन्धुदन्तैश्च वपेत् कर्म्मसु[6] योजयेत् ॥ ६७ ॥
रसकस्य पलैकं तु[7] हेममाक्षिकसंयुतम् ।
सैन्धवस्य पलार्द्धं तु मातुलुङ्गाम्ल[8]संयुतम् ॥ ६८ ॥
पाचनं कारयेत् पश्चात्[9] प्रातं[10] कुङ्कुमसन्निभम् ।
इन्द्रगोपसमं[11] कल्कं पुटयोगेन जारयेत्[12] ॥ ६९ ॥
तत् कल्कं मधुसंयुक्तं शर्कराटङ्कणान्वितम्[13] ।
एकीकृत्याथ संमर्द्य[14] गव्यक्षीरेण[15] पाचयेत् ॥ ७० ॥
प्रागेव शोधितं शुल्वं रसकल्केन[16] रञ्जयेत् ।
रञ्जयेत् त्रीणि वाराणि जायते हेम शोभनम् ॥ ७१ ॥
भावयेन्मुनिपुष्पाणि करवीरं मनःशिलाम्[17] ।

---

(1) प्रम्विमिष्टानि वर्णानि, a variant in D. (2) D reads सेचनं मुहुः, which is not grammatical. (3) आवर्तितानि त्वनुवर्णानां, an incorrect variant in D. (4) कुर्यात् कुष्टराटकैः, an incomplete charana in D. (5) D reads सर्पिका, which seems to be an error of the scribe. (6) D reads कर्मं च, which is not grammatical. (7) D reads फलैकं तु, which is incorrect. (8) K reads मातुलिङ्गाम्ल. (9) K has only कांचरयेत् पश्चात्. (10) K reads भुतं, which has no sense. (11) K reads इंद्रगोपसमा, which is incorrect. (12) K reads जायते. (13) D reads erroneously शर्कराटङ्कणान्विताम्. (14) एकीकृत्वा सुतं मर्द्य, an incorrect variant in D. (15) D has गवाक्षीरेण, which is incorrect. (16) D reads रसकल्केन, which is incorrect. (17) करवीरमनःशिलाः, a variant in D.

तत्पूर्व्वं रञ्जितं[1] शुल्वं शिलया च तथा युतम् ।
अन्धमूषागतं[2] ध्मातं जायते हेम शोभनम् ॥ ७२ ॥
तेनैव रसकल्केन तारपिष्टिं तु कारयेत् ।
सेचयेत् कङ्गुणीतैले तद्दिव्यं[3] कनकं भवेत् ॥ ७३ ॥
अर्ज्जुनी लाङ्गली पद्मचारिणी[4] ब्रह्मवारुणी[5] ।
सुवर्णा[6] चौषधीभिश्च गैरिकेण तु पार्व्वति ।
विलिप्तं शुल्वपत्रं तु निषिक्तं कनकं भवेत् ॥ ७४ ॥
मयूरग्रीवतुल्यञ्च[7] कुङ्कुमं रसकं तथा ।
बालवत्सपुरीषं च विषं हालाहलं तथा ।
रक्तचित्रकचूर्णञ्च[8] समभागानि कारयेत् ॥ ७५ ॥
मर्द्दयेन्मध्यमाम्लेन छायाशुष्कं च कारयेत् ।
मधुना सह संयोज्य[9] नागपत्राणि लेपयेत् ॥ ७६ ॥
मूकमूषागतं[10] ध्मातं नागं रञ्जयति क्षणात् ॥ ७७ ॥

(1) तत्पूर्वरञ्जितं, a variant in D. (2) D and K read अंधमूषा-गतं, which is not correct. (3) K reads तं दिव्यं, which is not correct. (4) D reads लाङ्गली पद्मचारिणी. K reads पद्मचारिणी, which seems to be incorrect. (5) B reads ब्रह्मवारुणि, which is incorrect. (6) D reads सुरवर्णं, which is incorrect. K reads सुवर्णं. (7) D has तुल्यं च, which is incorrect. (8) D reads वर्णं तु, which seems to be incorrect. K has तु instead of च. (9) मधुमांसकसंयुज्य, a variant in B, which has no clear sense. मधु सहसं जोज्यं, an incorrect variant in D. K reads संयोज्यं. (10) D and K read मूकमूषागतं, which is incorrect.

शाकपत्र[1]रसेनैव सप्तवारं निषेचयेत् ।
अष्टाविंशतिकल्को वा[2] तैले भूनागसम्भवे ।
तन्नाग[3] जायते दिव्यं देवाभरणभूषणम् ॥ ७८ ॥
अथवा भूलताचूर्णं[4] नागचूर्णं समांशकम् ।
अन्धमूषागतं ध्मातं तैले तप्तं[5] निषेचयेत् ॥ ७९ ॥
एवं कृते सप्तवारं भवेत् षोडशवर्णकम् ॥ ८० ॥
बालवत्स[6]पुरीषं च लाक्षागैरिकचन्दनम् ।
हंसपादाख्यदरदं[7] बिल्वमज्जा गुडस्तथा ॥ ८१ ॥
राजावर्त्तं च कङ्कुष्ठं शाक[8]पत्रभववारिणा ।
भुजङ्गं कनकं कुर्य्याच्छतवारं निषेचनात्[9] ॥ ८२ ॥
मञ्जिष्ठा रजनीद्वन्द्वं काञ्ची कनकमाक्षिकम्[10] ।
कौसुम्भं विषसिन्धूत्थं[11] दरदं रक्तचन्दनम् ॥ ८३ ॥
शाकपत्रवपालाश-कुसुमैः सह संयुतम् ।
सेचनाच्छतवारेण[12] नागं रञ्जयति प्रिये ॥ ८४ ॥

---

(1) D and K read अशोकपत्र.　(2) K reads वै.　(3) B and K have तं नागं, which is grammatically incorrect.　(4) B reads भूलताचूर्णे, which is incorrect.　(5) B reads तैलतप्तं. D reads तैले तदा. K reads अंधमूषागतं तैले तप्तं तप्तं.　(6) D reads erroneously बालवैव.　(7) हंसपादाख्यदरदं, a variant in D.　(8) B reads शोक, which seems to be incorrect.　(9) D has शतवाराणि निषेचयेत्. K has शतवाराणि सेचयेत्. Both the readings are incorrect.　(10) काञ्चि-चतुष्कमाक्षिकम्, a variant in D.　K has only काञ्चिकं.　(11) B has सिंधुत्थ, which is incorrect.　(12) This charaṇa is wanting in K.

कङ्कुष्ठं गन्धपाषाणं[1] रजनीद्वितयं तथा ।
भावयेत् सप्तवारांश्च चामीकररसेन तु[2] ॥ ८५ ॥
निषिक्तं शिंशपातैले[3] सप्तधा प्रतिवापितम्[4] ।
नागं रञ्जति च[5] क्षिप्रं रञ्जितं चाक्षयं भवेत् ॥ ८६ ॥
विद्रुमं दरदं तीक्ष्णम् अनेन[6] प्रतिवापितम् ।
मञ्जिष्ठाकिंशुकरसे शाके चैव निषेचयेत्[7] ॥ ८७ ॥
प्रतिवापनिषिक्तश्च[8] क्रमेणानेन रञ्जितः[9] ।
भुजगो[10] हेमतां याति नात्र कार्य्या विचारणा[11] ॥ ८८ ॥
उक्तं हेमदलं[12] देवि वरं तारदलं[13] शृणु ॥ ८९ ॥
श्वेताभ्रं काञ्जिके स्विन्नं[14] त्रिवारं पुटितं ततः ।
खल्वटङ्कणपक्वं च मुषमुखे तु वापयेत्[15] ॥ ९० ॥

---

(1) B and K have गंधपाषाण. (2) K reads शाकाम्बररसेन तु. (3) D reads तैलेः. (4) D reads erroneously प्रतिवापिता. (5) नागं रञ्जयते is the reading in B. नागं रञ्जति is the reading in D. This hemistich and the next one are not found in K. (6) D reads अमनं. (7) K reads erroneously निश्चयेत्. (8) D reads निषिक्तं च. K has विसम before प्रतिवापनिक्षिप्तं च, which is incorrect. (9) क्रमे चानेन रञ्जयेत्, a variant in D. (10) K reads भुजंगो. (11) K reads विचारणात्, which is incorrect. (12) D has सिक्तं हेमदले. K has रक्तहेमदलं. Both सिक्तं and रक्त are absurd. (13) D reads चिरं तालदलं, which is not correct. (14) B has स्विन्ने. काञ्जिकं स्विन्नं is the variant in D. (15) D reads पक्षपाकेन. K reads वाहयेत्.

पञ्चमांशेन मिश्रं तत्[1] तारं तालं च वेधयेत्[2] ।
तत्तालं[3] मेलयेत्तारे द्रुतं सिक्तेन[4] वेधयेत् ॥ ९१ ॥
रससैन्धवमेकैकं तिलसर्ज्जी[5]द्रवं द्वयम् ।
टङ्कैकं कनकरसे[6] मर्द्दयेद्दिवसत्रयम् ॥ ९२ ॥
तेन लिप्तं ताम्रपत्रं[7] धमेदावर्त्तितं[8] पुनः ।
इङ्गुदं सतालमूलं[9] दध्यम्लेन तु पेषयेत् ॥ ९३ ॥
तन्मध्ये ढालयेच्छुल्वं सप्तवारं[10] दलं भवेत् ।
तृतीयांशेन बीजस्य मेलयेत् परमेश्वरि[11] ॥ ९४ ॥
लाङ्गली चित्रको दन्ती द्वयग्नोत्तरवारुणी[12] ।
गोधावती वध्यवल्ली[13] श्वेतार्कः शक्रवारुणी[14] ॥ ९५ ॥

---

(1) पञ्चमासे धनं नारं, a variant in D. K has only पंचमांशेन घन. (2) तारवङ्गं तु वेधयेत्, a variant in B. तार तालं च बन्धयेत्, a variant in D. K has तारं वङ्ग च वेधयेत्, (3) B has तद्वत्ते. D has तत्तारं. (4) B reads द्रुता सिक्तेन. D reads द्रुत सिक्तेन. Both are incorrect. (5) B reads सिलासर्जि. (6) D reads कनकं रसे, which is incorrect. (7) B has तालं पत्रं. D has ताम्रपात्र. Both are incorrect. (8) D reads धमेद्याचितितं, which has no clear sense. (9) इङ्गुदीमूलतालमूलं, a variant in B. इङ्गुदीसमतामूलं, a variant in D. इंगुदिसमतामूलं, a variant in K. (10) K reads सप्तवारं. (11) D has only परमेश्वरि out of this hemistich. (12) D reads द्वयुत्तवारुणी, which is incorrect. (13) B reads गोधापती, which is not correct. D has गन्धा वध्यवल्ली च , K has गोधावर्तो वल्ली. Both are incorrect and incomplete. (14) B reads शतवारुणी. D reads श्वेतार्कं, which is incorrect.

विष्णुक्रान्ताश्वगन्धा च[1] शिग्रुपत्राङ्गुली तथा ।
पुनर्नवा चापामार्गं इङ्गुदी[2] चक्रमर्दकः ॥ ९६ ॥
गुडूची चैव हिंस्रा च[3] एकद्वित्रिचतुर्थकाः[4] ।
सद्विषीक्षीरसन्धानात्[5] समाहादुपरि प्रिये[6] ।
निषेके क्रियमाणे तु[7] जायते शुल्वशोधनम्[8] ॥ ९७ ॥
ताल[9]षोडशभागेन शुल्वपत्राणि लेपयेत् ।
स्थापयित्वान्धमूषायां[10] त्रिधा चावर्त्तयेत् पुनः[11] ॥ ९८ ॥
शुक्लवर्गस्त्रिधा क्षारं[12] शङ्खसैन्धवसर्ज्जिकाः ।
दन्ताः कपर्दाः कम्बुश्च[13] शुक्तयः शुल्वद्रावणा.[14] ॥ ९९ ॥

---

(1) विष्णुक्रान्ता चाश्वगन्धा, a variant in B. विष्णुक्रान्ता च गन्ध च, a variant in D. (2) D reads शिग्रु च, which is incorrect. (3) गुडूची च वधहिंसा च, a variant in D. (4) B reads -चतुर्थका. (5) D reads संधाता, which is incorrect. (6) D has समाहात् परिशोधयेत्. K has समाहादुपरी योजयेत्. (7) क्रियमाणे जायते तत्, a variant in D. निषेक क्रयमाणे तु, a variant in K. Both the readings are incorrect. (8) D reads शुल्वं शोधनं परम्, which mars the metre. (9) B reads ताल:. D reads तं तु. K wants this term. (10) स्थापयित्वा त्रिधा यावत्, a variant in D. K reads स्थपयीत्वांधमूखायां, which is incorrect. (11) D has तावद्वन्धन तत् पुनः, which is incorrect. K has त्रिधा संवर्तयेत् पुनः. (12) शुक्लवर्गस्त्रिधाक्षार, a variant in B. शुल्वं वङ्गं त्रिधा क्षीरं, a variant in D. शुक्लवर्गेत्रिधाक्षारं, a variant in K. (13) B reads कंबुश्च. D reads दन्ता कापर्दि कबु च. K reads कपर्दि. (14) B has शुक्तय: शुल्वद्रावकः. D has शुक्ल य: शुल्वपाचनम्. K has only शुल्वद्रावणं.

पादमेतत्सुरासेकै[1]र्जायते नखपाण्डुरम् ॥ १०० ॥
भयोऽयस्कान्तभागाः[2] स्युरारतारद्वयं तथा ।
वङ्गस्य[3] दश भागाः स्युस्तारवेधेन[4] वेधयेत् ॥ १०१ ॥
आरस्य द्विगुणं तारं तारात् कान्तं चतुर्गुणम् ।
कान्तादष्टगुणं[5] वङ्गं तारवेधेन वेधयेत्[6] ॥ १०२ ॥
तालं सूतं समं कृत्वा वज्रीक्षीरेण मर्द्दितम् ।
पुटं दत्त्वा तु यत्नेन सत्त्वं पतति शोभनम् ॥ १०३ ॥
वङ्गमावर्त्य दैवेऽग्नि वज्रीक्षीरेण[7] पेषयेत् ।
एकविंशतिवाराणि वङ्गशोधनमुत्तमम् ॥ १०४ ॥
तद्वङ्गं जारयेत् सूतं[8] समं वा[9] द्विगुणादिकम् ॥ १०५ ॥
भल्लातराजिकातैल[10]-शङ्खचूर्णविड़ेन च[11] ।
नागवल्ली भवेत्तेन समं वङ्गेन सारणात्[12] ॥ १०६ ॥
क्षारोदकनिषेकाच्च[13] तद्बीजमनेकधा[14] ।

---

(1) यद्दातमसुरा सेकैः, a variant in B. पादमेतु सुचेकैकं, a variant in D. पादमेतत्सुराकैकं, a variant in K. (2) D reads भयोकान्तस्य भागा स्यात्, which is incorrect. K reads भयो भास्करभागाः स्युः. (3) B reads वंशस्य. (4) K reads तारवंधेन. (5) D has कान्ताद्दशगुणं. (6) B has तारं वेधेन वेधयेत्. D has तारवन्धेन वेधयेत्. K has तारं बन्धेन वेधयेत्. (7) K reads चर्कक्षीरेण. (8) B reads जार्यते सूते, which is incorrect. D reads जायते सूतं, which is also incorrect. (9) D and K read तत्-समं. (10) D has भल्लातराजितैलं, an incomplete charaṇa. K has भल्लातं राजिकातैलं. (11) B reads विडानि. D reads विड्वनम्. (12) D and K read सारयेत्. (13) K has क्षीरोदकनिशिकाच्च, which seems to be incorrect. (14) तद्यपिवरैकधा, a variant in D, which is senseless.

तमुपायं प्रवक्ष्यामि मार्दवं येन जायते ॥ १०७ ॥
घृतं दधि पयः[1] क्षौद्रं बिल्वजम्बीरकद्रवैः[2] ।
गुड़स्थिलसमायुक्तो[3] निषेकात्[4] मृदुकारकः[5] ॥ १०८ ॥
गजदन्ता हयनखा[6] मेषशृङ्गं च सैरिभम्[7] ।
कम्बु[8]निर्याससंयुक्तं सप्तवारं निषेचयेत्[9] ॥ १०९ ॥
सहस्रधा विस्फुटितं दलं भजति[10] मार्दवम् ॥ ११० ॥
ज्योतिष्मतीकुसुम्भानां[11] तैले कारञ्जकेऽपि वा[12] ।
निषेकः शस्यते[13]ऽत्यर्थं कनकस्य विचक्षणैः ॥ १११ ॥
आवर्त्यमानं तारे च[14] यदि तन्नैव[15] निर्मलम् ।
काचटङ्कणवापेन क्षिप्रं निर्मलतां व्रजेत् ॥ ११२ ॥
मधुक[16]मधुमेषाज्य-सौराष्ट्रीगुड़सैन्धवैः[17] ।

---

(1) B reads घृतयष्टिमधु. (2) किल्वजंबीरकांद्रवि, a variant in B. (3) गुड़तैलसुमायुक्त, an incorrect variant in D. (4) D and K read वाधयेत्. (5) D has मृदुकारकम्. K has मृदुकारकै. (6) B reads हयनखो. (7) मत्स्यं चैव सैन्धवं, an incomplete charaṇa in D. मेषीष्ट्रं च सैंधवं, a variant in K. (3) D and K read कङ्कु, which seems to be incorrect. (9) D reads सप्तवारांश्च सेचयेत्. (10) D has सहस्रधा वस्फुटिते दले भवति. K has सहस्रधा च स्फुटते दले भवति. (11) ज्योतिष्मंतसुभानां, an incomplete charaṇa in B. (12) कारंजिकेऽपि वा, a reading in D. (13) K reads शास्यते. (14) B reads तारेच. K reads ततारे. (15) D reads तं नैव, which is incorrect. (16) B, D and K read मधुकं, which is not accurate. (17) D reads गन्धमैन्धवम्.

शुक्तिकाम्बुखुरावापं[1] चन्द्रार्कं मृदु जायते ॥ ११३ ॥
मधुतैलघृतैश्चैव[2] वत्समूत्रे निषेचनात्[3] ।
जायते खरसत्त्वानां दलानामपि मार्दवम् ॥ ११४ ॥
चिञ्चारसेन सामुद्रैः क्षीरे चार्कस्य[4] वह्निना ।
विशुद्धं जायते तारं शङ्खकुन्देन्दुसन्निभम् ॥ ११५ ॥
यदि तन्निर्मलं[5] नैव तदा[6] तद्वत् पुनः पचेत् ।
विधिरेष[7] समाख्यातस्तारकर्मणि पूजितः ॥ ११६ ॥
कङ्गुणी[8]तैलमञ्जिष्ठा-हरिद्राद्वयकुङ्कुमम् ।
निषेकात् कुरुते हेम बालार्कसदृशप्रभम् ॥ ११७ ॥
शुल्वार्द्धं गन्धकं दत्त्वा तदर्द्धं मृतसूतकम्[9] ।
चाङ्गेरी[10]स्वरसेनैव मर्द्दयेद्वासरत्रयम् ॥ ११८ ॥
प्लुतं[11] चित्ररसेनैव लेपयेद्धेम पाण्डुरम् ।
पक्वा[12] पञ्चमृदा देवि हेमोत्कर्षणमुत्तमम् ॥ ११९ ॥

---

(1) सिक्तसमसमखुरावापं, a variant in D. शुक्तिकचखुरावापं, a variant in K. (2) मधु तैलं घृतं चैव, a variant in D. मधुतैलघृतं चैव, a variant in K. (3) वत्स्याभिश्च निषेचयेत्, a variant in B. वत्समूत्राग्नि सेचनात्, a variant in D. Both the variants have no clear sense. (4) D reads क्षीरं वार्कस्य, wherein the first term is incorrect. (5) B and D read तं निर्मलं, which is incorrect. (6) D reads तत्र. (7) D reads erroneously विधिरेषा. K reads विधिरेव. (8) K has कंगुणि. (9) B has सूतपारदं, which seems to be incorrect. (10) B reads, शाङ्करी, which appears to be incorrect. (11) D reads प्लावितं, which mars the metre. (12) D and K read छाया.

हेम शुल्बं तथा तीक्ष्णं समभागानि कारयेत् ।
अन्धमूषागतं[1] ध्मातं खोटो भवति तत्क्षणात् ॥ १२० ॥
खोटस्य भागमेकं तु रसहेमसमन्वितम् ।
पाचयेदनुजाख्येन[2] यावत् कुङ्कुमसन्निभम् ॥ १२१ ॥
शतांशेन तु तेनैव वेधयेद्धेम पाण्डुरम्[3] ।
जायते कनकं दिव्यं द्विवर्णोत्कर्षणं[4] भवेत् ॥ १२२ ॥
यावच्छुद्धं भवेत्तावत् पुटेल्लवणभस्मना[5] ।
रक्ततैले[6] निषेकाच्च जायते हेम शोभनम् ॥ १२३ ॥
मर्दितं कटुतैलेन[7] स्वर्णगैरिकगन्धकम् ।
अथवा मातुलुङ्गाम्ले[8] राजावर्तकमाक्षिकम् ॥ १२४ ॥
अथवा विट् कपोतस्य[9] राजावर्तकसैन्धवम् ।
पुटनाच्छ्वेतकनकं[10] कुरुते[11] कुङ्कुमप्रभम् ॥ १२५ ॥
राजावर्तस्य चूर्णं तु शिरीषकुसुमद्रवैः[12] ।

---

(1) D and K read अंधमूषागतं, which is not correct. (2) पाचयेदनजाख्येन, a variant in D. [अनुज may mean मध्यम.] (3) वेधयेत् घनपाण्डुताम्, a variant in D. (4) This charaṇa and the next three are not found in D. K reads द्विगुणोत्कर्षकं. (5) B reads भस्मता, which is incorrect. (6) K reads तक्रे तैले. (7) सकुङ्कुतैलेन सिक्तं, a variant in D, which is senseless. (8) K reads मातुलिंगाम्ले. (9) D has विड्कपोतस्य. (10) K has पु...ताच्छेतकनकं, which is incomplete as well as incorrect. (11) K reads जायते, which is not proper. (12) शिरीषकुसुमोद्भवैः, an incorrect variant in K.

भावितं बहुशः श्विष्ममधीत्वंशेन[1] वर्णदः ॥ १२६ ॥
ग्रसमः कङ्गुणीतैले ताम्रं हेम्ना समं हुतम्[2] ।
माक्षिकेण सतावापं घतांशेन तु वर्णकृत्[3] ॥ १२७ ॥
कार्पासबीजदरद[4]-तुत्थसैन्धवगैरिकैः[5] ।
पलाशलाक[6]मञ्जिष्ठा-रक्तचन्दनविद्रुमैः[7] ॥ १२८ ॥
गुड़भल्लातकक्षेद्र[8]-वज्रविष्ठेष्टकायुतैः[9] ।
चावापाज्जायते श्वेतं[10] कनकं रविसन्निभम्[11] ॥ १२९ ॥
रक्ताष्टकं त्रयो भागाः[12] त्रयो भागाः समुद्रजम्[13] ।
सितार्कपत्रतोयेन[14] पुटो वर्णप्रदो भवेत्[15] ॥ १३० ॥

---

(1) B reads श्विष्ममधीत्वंशेन. D reads श्विष्ममधीत्वंशात्तु. K reads श्वेष्म मधीत्वंशात्तु, which is incorrect. (2) ताम्रहेम्नासमहुतं, a variant in B. ताम्रे हेम्ना रवे घृतं, a variant in D, which is not correct. (3) D reads the whole hemistich thus : माक्षिकेन घतांशेन तृत्पावापमद्रवेत्, which is partly incorrect. K wants सता. (4) B and D read कार्पासबीजं दरदं. (5) D reads तुत्थसैन्धगैरिकः, which is incorrect. (6) D reads पलाशन्देन. K reads पलाशलाक. (7) D and K read मिश्रितैः instead of विद्रुमैः. (8) गुडं भल्लातकक्षेद्रं, a variant in D. (9) वज्रविष्टाष्टकायुतैः, a variant in D. वज्रसष्टेष्टकायुतैः, an incomplete variant in K. (10) B reads ईषि. D reads श्वेत. (11) B has रविसमप्रभं, D has विद्रुमप्रभम्. (12) B has रक्तेष्टक. D has काकविट् घ्राणविट् चैव. K reads सरक्ताष्टकाश्वी भागाः. (13) B has सामद्रं योनयो ष्वितं. K has सामुद्रं मोजयेष्विपं. Both the readings are unintelligible. (14) सिताक्कंपचतापेन, a variant in D. (15) पुटवर्णप्रदापयेत्, an incorrect variant in D.

रक्तपीतौ[1] समौ कृत्वा ताभ्यां तुल्यं च[2] माक्षिकम् ।
करञ्जतैलेनालोड्य मूकमूषागतं[3] धमेत् ॥ १२१ ॥
सत्त्वात् पीत[4]द्व्यांशेन द्रुत पीतशतेन च[5] ।
शतं पीतसहस्रेण[6] कोटिमर्धेन विध्यति[7] ॥ १२२ ॥
शतशः किंशुकरसे भावितं[8] लवणं पुनः ।
सटङ्कणपुटेनैव[9] वर्णोत्कर्षप्रदं[10] भवेत् ॥ १२३ ॥
लोहचूर्णं[11] त्रयो भागा गैरिकं द्विगुणं तथा[12] ।
मधुकाक्तुमुदाम्भोभिः[13] मूत्रेणापि निषेचयेत्[14] ॥ १२४ ॥
पेषयेत् कोद्रवेणैव[15] मोहमध्ये[16] तु निक्षिपेत् ।

---

(1) D has रक्तपित्तौ. (2) D reads तुल्यं च, which is incorrect. (3) B reads पंचमूषागतं. D and K read मूकमूषागतं, wherein the middle term is incorrect. (4) D reads पाद. (5) द्व्यात् पीतेन च पृथक्, a variant in D. (6) शतपीतं च सजेन, a variant in D. शतपीतसहेना, a variant in K, which is incomplete. (7) B reads कोटिमर्धं न विध्यति. D reads कोटिमूर्धेन तिष्ठति. K reads कोटिमर्धे न तिष्ठति. (8) D reads erroneously भवेता. (9) सटंकणं तु पुटनात्, a variant in B. (10) D and K read वर्णोत्कर्षप्रभं, which is not correct. (11) D reads लोहचूर्णं. (12) गौरिका त्रिगुणस्य च, a reading in B. गैरिका त्रिगुणाय च, a reading in D. गैरिकं त्रिगुणस्य च, a reading in K. All are inaccurate. (13) मधुकक्कुदाम्बाभि, a variant in B. मधुकुन्देन कुन्दाभो. a variant in D. मधुकुंदेनकुंदातो, a variant in K. All are partly incorrect. (14) B reads च पेषयेत्. K reads च पेश्रयेत्, which is incorrect. (15) पेषयेद्रवणेनैव, a variant in D. पेषेद्रसाद्रवेणैव, a variant in K. (16) D reads मोषामध्ये.

पञ्चीत्यंशेन तदिदं[1] वापाद्वर्णप्रदं भवेत् ॥ १३५ ॥
शुल्वातिरिक्तं कनकं[2] पुटयेदन्धमूषया[3] ।
सामुद्रधातुतोयेन निषेकः शस्यते तदा[4] ॥ १३६ ॥
सामुद्रगैरिकालिप्तं[5] द्रावितं[6] मृदुतां व्रजेत् ।
गोमयक्षारलिप्तं तत्[7] समभागं प्रलेपयेत् ॥ १३७ ॥
शुल्वातिरिक्तं कनकं[8] पुटं निर्मलतां व्रजेत् ॥ १३८ ॥
नागास्थिभस्मकल्केन मूषां लिप्त्वा विचक्षणः ।
निक्षिपेदन्धमूषायां[9] नित्यं हेमदलं भवेत् ॥ १३९ ॥
ततस्तन्मृदुभिर्घोटैः[10] सम्प्रसार्य विचक्षणः ।
तप्ततप्तं[11] निषेक्तव्यं यावत्तन्मृदुतां व्रजेत् ॥ १४० ॥
सामुद्र[12]धातुकल्केन लेपयित्वा विचक्षणः ।
कृत्वा पलाशपत्रे[13] तु तद्धेम्मृदुवह्निना[14] ॥ १४१ ॥

---

(1) D reads तावितं. K reads यदीदं. Both are incorrect. (2) शुल्वातिरिक्तकनकः, a reading in D. शुल्वाति नक्तं कनकं, an incorrect reading in K. (3) पुटे दैयान्धमूखया, a variant in D. K reads मूखया, which is incorrect. (4) D has an incomplete reading—रसेकः शस्यते दा. (5) समुद्रं गैरिकालिप्त, a variant in D. सामुद्रं गैरिकं लिप्तं, a variant in K. (6) D reads erroneously द्रावयित्वं. (7) D reads गोमक्षद्भस्मवलितं. K reads -लिप्तं च (8) D reads शूर्णके, which is senseless. (9) नापयेदंधमूषायां, a variant in B. (10) D and K read मृदुभिर्घोटकैः सम्यक्. (11) B reads तप्तं तप्तं. This hemistich and the next one are not found in D. (12) K reads सामुद्रं. (13) D reads पक्षपत्रे. K reads पालाशपत्रे. (14) D has तद्धैतं दृढवह्निना, which is incorrect.

तावत् पचेत् पचेद्धीमान्[1] यावन्निर्मलतां व्रजेत् ।
ततस्तच्छीतलं[2] कृत्वा तोये निर्वापयेत्ततः ॥ १४२ ॥
[तावदेव[3] विधिः कार्य्यो यावद्वर्षः समागतः ॥ १४३ ॥
ततस्तत्तापयेद्भूयो गोमयक्षचूर्णसंयुतम् ।
तप्तं तपनतस्तत्र लवणे प्रक्षिपेद्बुधः ॥ १४४ ॥
प्रकृष्टं तु ततो हेम पचेत्सवर्णगैरिकैः ।
कर्षकेण तु संशोध्य भूयो भूयो विचक्षणः ॥ १४५ ॥
लेपयेत् पुटयेच्चैव वर्णसंजननाय च ।
तारारिष्टं तु देवेशि रक्ततैलेन पाचयेत् ॥ १४६ ॥
निषेचयेच्च शतशो दलं रज्यति रञ्जितम् ॥ १४७ ॥
रसोपरसवर्गं तु निर्वहेन्नागवङ्गयोः ।
नागवङ्गौ पुनः शुल्वे शुल्वं तारे तु निर्वहेत् ॥ १४८ ॥
तारं निषिक्तं देवेशि रक्ततैले पुनः पुनः ।
जायते हेम कल्याणं सर्व्वदोषविवर्ज्जितम् ॥ १४९ ॥
हेमार्केण समायुक्तं रसोच्छिष्टं प्रशस्यते ।
जायते कनकं दिव्यं मातृकासममुत्तमम् ॥ १५० ॥
वङ्गाभ्रं सिततार्प्यं वा शैलं वा वापयेत् सिते ।
तच्च तारे दशांशेन वर्णोत्कर्षप्रदं भवेत् ॥ १५१ ॥
अष्टानवतिरंशास्तु तारारिष्टस्य पार्व्वति ।

---

(1) तावद्विमयतो विद्यात्, a variant in D. तावद्विमते विद्यात्, an incomplete variant in K. (2) ततस्तच्छीतलं, a reading in K. (3) The portion within brackets (143—152) is found only in B.

एकैको रसहेमांश: शतवेध इति स्मृत: ॥ १५२ ॥]
अनेन क्रमयोगेण सहस्रांशेन वेधक:[1] ॥ १५३ ॥
मूषां[2] तु गोस्तनीं कृत्वा दलपूर्णां तथा दृढ़ाम्[3] ।
धमेद्दलं निर्म्मलं तत्[4] धृतमुन्मीलितं यदा ॥ १५४ ॥
क्रामणेन समायुक्तं रसं दत्त्वा तु वेधयेत् ।
दलपत्रं रसालिप्तं ताम्रपात्रान्तरे[5] स्थितम् ॥ १५५ ॥
उपरिष्टान्मृदा लिप्तं दत्त्वा मृदग्निमेव च ।
बीजसंयुक्तमावर्त्य स्थापयेन्मतिमान् सदा ॥ १५६ ॥
टङ्कणं तिलचूर्णं च शीतले तु निवापयेत्[6] ।
रससिद्धं तु[7] कनकं पश्चैकं स्थापयेद्भुवि ।
उद्धृत्य पुनरप्यस्य[8] विज्ञेयं तत् सुरेश्वरि ॥ १५७ ॥
पुनरन्यं प्रवक्ष्यामि रसवेधो[9] यथा भवेत् ॥ १५८ ॥
तिलसर्षपचूर्णस्य द्वे पले च प्रदापयेत्[10] ।
द्वे पले च हरिद्राया एकत्रैव तु मर्द्दयेत्[11] ॥ १५९ ॥

---

(1) B has सहस्रांशादिवेधक:. D has सहस्राशेन विधायक:, which is incorrect. (2) D and K read मूषां, which is incorrect. (3) दलं पूर्णं तथा दृढं, an incorrect variant in D. (4) D and K read च. (5) B reads ताम्रं पात्रान्तरे. K reads ताम्रपत्रांतरे, which is incorrect. (6) D reads शीतलेन तु पेषयेत्. K reads शितलेन निवापयेत्, which is partly incorrect. (7) D reads रसे सिद्धे तु, which is incorrect K reads रससिद्धं तु. (8) D reads पुनरप्यस्य, which is unintelligible. K reads पुनरप्युपाश्च. (9) B reads रसवेधा:. D and K read रसवेधं. Both are incorrect. (10) D and K read द्वे पले च हरिद्रया, wherein the last term is incorrect. (11) This hemistich is not found in D and K.

मर्द्दयेन्मृण्मये पात्रे पलपञ्चक[1]पन्नगम् ।
वापयेत् सितसूतेन[2] शलाकां चैव चालयेत्[3] ॥ १६० ॥
पुनश्च वापयेत्तावत्[4] यावत् कठिनतां व्रजेत्[5] ।
तन्नागं जायते दिव्यं जाम्बूनदसमप्रभम्[6] ॥ १६१ ॥
उद्घाटं[7] कथयिष्यामि रसविद्धं च पन्नगम्[8] ॥ १६२ ॥
घोषाकृष्टं तु यत् शुल्वं[9] षोड़शांशेन[10] योजयेत् ।
एकीकृत्य[11] समावर्त्य छागमूत्रे निषेचयेत् ।
सर्व्वदोषविनिर्म्मुक्तं जायते हेम शोभनम्[12] ॥ १६३ ॥
लोहवेध इति ख्यातो विस्तरेण सुरेश्वरि ॥ १६४ ॥
यथा लोहे तथा देहे कर्त्तव्यः सूतकः सदा ।
समानं कुरुते देवि प्रविशन्[13] देहलोहयोः ॥ १६५ ॥

---

(1) D reads पलं पंचक. K reads पलं पंचक. (2) दापयेदम्बसूत्रेण, a variant in D. K reads वस्त्रसूतेन. (3) D reads शालाकां चलापयेत्, which is incorrect. (4) B reads पश्चात्. D reads पश्चाद्दापयेद्दरिद्रा, an incomplete variant in D. (5) K has the following hemistich after व्रजेत् :—संस्थापयेद्दरिद्रां तु यावत् कठिनतां व्रजेत्. (6) D reads जम्बुनद-समन्वितम्, which is not correct. (7) उद्धारं is the readings in D. (8) D has रससिद्धिं च पावनम्. K has रसबंधं च पन्नगं. (9) D reads शल्यं तु, which is incorrect. (10) K reads erroneously षोड़शांश. (11) D and K read एकीकृत्वा, which is grammatically incorrect. (12) D has मम शोधनम्, which is incorrect. (13) D reads प्रत्ययात्. K reads प्रत्ययं.

पूर्व्वं लोहे परीक्षेत ततो[1] देहे प्रयोजयेत् ।
तत्समाचक्ष्व देवेशि किमन्यच्छ्रोतुमिच्छसि ॥ १९९ ॥

इति श्रीपार्व्वतीपरमेश्वरसंवादे[2]
रसार्णवे रससंहितायां
लोहवेधो नाम[3]
सप्तदशः पटलः ॥ १७ ॥

---

(1) D reads erroneously बद्धो. (2) B wants this line. (3) D and K have लोहविधानो नाम. This is not correct, as we see in the beginning of the next पटल लोहवेधः &c. and not लोहविधान.

## अष्टादशः पटलः ।



श्रीदेव्युवाच ।

लोहवेधास्त्वया देव यदर्थमुपवर्णिताः[1] ।
तं देहवेधमाचक्ष्व येन स्यात् खेचरी गतिः[2] ॥ १ ॥

श्रीभैरव उवाच ।

प्रथमं शोधयेद्देहं पश्चात् कल्पं समाचरेत् ।
अन्यथा न[3] भवेत् सिद्धिः रसे चैव रसायने ॥ २ ॥
प्रातः प्रातः पिबेदादौ त्रिदिनं घृतसैन्धवम्[4] ।
वीतक्वाः स्तनजं[5] क्वाथं तदनु[6] त्रिदिनं पिबेत् ॥ ३ ॥
विधिना स्वेदनं कृत्वा सयवक्षारशर्करम्[7] ।
त्र्यहं पिबेद्दराक्वाथं[8] सदेवासुरवन्दिते[9] ॥ ४ ॥
क्वाथं[10] कटुकरोहिण्याः सम्यक् जाते विरेचने[11] ।
त्रिदिनं यावकान्नं च[12] भुञ्जीत घृतसंयुतम् ॥ ५ ॥

---

(1) लोहवेधास्त्वया देवि यदर्थमुपवर्णिताः, an incorrect variant in D. (2) D reads खेचरा गतिः, which is incorrect. (3) D and K read नान्यथा तु. (4) D reads घृतसैन्धवः, which is incorrect. (5) B has वीतविस्तनजं. D has वीतव्यास्तनजं. K has वीतक्वास्तनजं. (6) B reads तदातु D reads तदेति. (7) D reads शर्कराम्, which is incorrect. (8) D has पिबेद्दतिक्वं, which is incorrect. K has वरक्वाथं. (9) सर्वे-वासुरवंदिते, a variant in B. सदेवासुरवन्दिते, a variant in D. (10) K reads क्वाथ. (11) B reads विरेचनं. (12) B has दिनं यावकान्नं तु.

पलाशबीजजन्तुघ्न-गुड़मोदकभक्षणात् ।
कीटस्य पातनं कुर्य्यादथ काकेष्टवारिणा[1] ॥ ६ ॥
वचामरिचसिन्धूत्थ-रजनीचणनागरात्[2] ।
धात्रीगुड़विड़ङ्गाश्च परागं दिवसत्रयम् ॥ ७ ॥
एवं संशोध्य शास्त्रज्ञं[3] क्षीरमुद्गाम्बुयावकैः[4] ।
ततो जातबलो[5] भूत्वा चरेद्रासायनं विधिम्[6] ॥ ८ ॥
धात्रीरसघृतक्षौद्रैः क्षीरैः सुरतरूद्भवैः[7] ।
लेहं[8] निर्मथ्य देवेशि त्रिचतुःषट्पलान्वितम्[9] ॥ ९ ॥
लघुमध्योत्तमैर्मानैः त्रिमासं प्रत्यहं[10] पिबेत् ।
आरोटं[11] भक्षयेत् पश्चात् जीर्णे च तदनन्तरम् ॥ १० ॥
वेधीकृत्य ततो देहं[12] ततो भक्ष्यं तु वर्द्धयेत्[13] ॥ ११ ॥

---

(1) This śloka is found in B only. (2) D has भक्षणं चणनागरं, K has only न नागरात्. (3) K reads शास्त्र, which is incorrect. (4) क्षीरमुद्गापायकैः, an incomplete variant in D. (5) जातं बली, a reading in D, which is incorrect. K reads जातबली. (6) चरेद्रौ सायनविधिं, an incorrect variant in D. रातद्रासायनं विधिं, a partly incorrect reading in K. (7) D reads तरुद्भवैः. K reads सुरतरुवैः, which is incorrect and incomplete. (8) B reads लेह, which is incorrect. (9) त्रिपलुषट्पलान्वितं in B. त्रिषट्च पलान्विते in D. Both the readings are incorrect. (10) D reads त्रिमासैः प्रत्यक्. K reads त्रिमासे प्रत्यहुत, which is absurd. (11) "सुशोधितो रसः सम्यक् आरोट इति कथ्यते ॥"—Vide रस. स. Chap. XI. v. 60. (12) D reads देहे. (13) B reads वर्द्धयेत्. D reads वैधयेत्. K reads वद्धं तु भक्षयेत्.

शोधितं व्योमताप्याभ्यां[1] पातितं तदनन्तरम्[2] ।
तन्दुलीयकभृङ्गाह्व[3]-पेषितं भावितं[4] रसम् ।
आरोटमिति सेवेत[5] प्रथमं देहसिद्धये[6] ॥ १२ ॥
अथवा भस्मतां प्राप्तं[7] षट्वारं[8] कल्कयोगतः ।
यावत् संवत्सरं पूर्णं तावदारोटकं भजेत्[9] ॥ १३ ॥

शिलाजतु[10]क्षौद्रविडङ्गसर्पि[11]
र्लौहाभयापारदताप्यभक्षम्[12] ।
आपूर्यते दुर्बलदेहधातुम्[13]
त्रिपञ्चरात्रेण यथा शशाङ्कः ॥ १४ ॥

---

(1) B has शोधितव्योमताभ्यां, an incomplete variant. D has शोधितं व्योमता पाति, which is senseless. K has शोधितं व्योम ताप्यं वि. (2) D reads तं तदनन्तरम्, an incomplete charana. (3) तन्दुलक भृङ्गाख्यं in D. तंडुपत्रभृंगाख्यं in K. Both are incorrect variants. (4) शोधितं भाषितं, an incorrect reading in D. K wants भावितं. (5) D reads आरोटमिति संवंते, wherein the last term is incorrect. K reads संभूते. (6) D reads देहशोधये, which is grammatically incorrect. K reads erroneously देहसिद्धयेत्. (7) B has प्राप्तं. D has मोक्षं, which is incorrect. (8) B reads षड्वा. (9) K reads भवेत्. (10) K reads शिलाजन. (11) K has विडंगसर्पि. D has क्षौरविडङ्ग-श्रोषा. K has क्षौद्रक्षौद्रावचं, which seems to be partly incorrect. (12) लघाभयपारदताप्यसखा, an incorrect variant in D. (13) आपूर्या दूर्बदैनेव देहे धातून्, an incorrect reading in D. आपूर्यं तथवदेहधातून्, also an incorrect reading in K.

वककाश्यारसक्षौद्र[1]-हरिद्राविफलागुडैः ।
काश्मीरजं रसं[2] व्योम-कान्त[3]मध्वाज्यसंयुतम् ।
भुक्त्वा गच्छेदमरतां वेधीकरणमुत्तमम् ॥ १५ ॥
चूर्णमभ्रकसत्त्वस्य कान्तलोहस्य वा ततः ।
तीक्ष्णस्य वा महादेवि त्रिफलाक्वाथभावितम् ॥ १६ ॥
यावदञ्जनसंकाशं वस्त्रच्छन्नं विशोध्य तत्[4] ।
भृङ्गामलक[5]सारेण हरिद्राया रसेन च ॥ १७ ॥
पुटितं रससंयुक्तं[6] मधुघृतसमन्वितम्[7] ।
लोहसंपुटमध्यस्थं मासं धान्ये प्रतिष्ठितम् ॥ १८ ॥
घृतेन मधुना लिह्यात् वेधीकरणमुत्तमम् ।
एवं वर्षप्रयोगेण[8] सहस्रायुर्भवेन्नरः ॥ १९ ॥
रससिद्धेः[9] पुरा हेम गुञ्जामात्रं दिने दिने ।
भक्षयेद्देहसिद्ध्यर्थं रससिद्धिः प्रजायते ॥ २० ॥
कान्ताभ्रसत्त्वं सरस-मौषधानवजारितम्[10] ।
लिह्यादादौ समध्वाज्यं[11] वेधीकरणमुत्तमम् ॥ २१ ॥

(1) D has वकएल्यारि सक्षौद्र, which is incorrect. K has an incomplete charaṇa—कश्यासाक्षौद्र. (2) D reads काश्मिरं तद्रसं. (3) B reads कांतं. (4) D reads वस्त्रच्छिन्नं विशेषतः, which is improper. K reads वस्त्रच्छन्नं विशेषतः, which is partly incorrect. (5) त्रिभागामलक is the reading in D. (6) B has क्षौद्रयुक्तं घृत. (7) मधुसंमिश्रितं ततः, a variant in B. (8) B reads एवं वर्षप्रयोगेन. (9) K reads रससिद्धे, which is grammatically incorrect. (10) D and K have कांताभ्रकसत्वं सत्वं रसमौषध् प्रयोजितम्. Here रसं is mentioned. (11) लिह्यादमं समध्वाज्यं, a variant in D and K. Here रसं is repeated.

वर्षं वर्षार्द्धमथवा पूर्व्वमेवं[1] तु भक्षयेत् ॥ २२ ॥
वज्रजीर्णो रसो[2] देवि ह्युत्तमः[3] परिकीर्त्तितः ।
मध्यमो हेमजीर्णस्तु तारजीर्णोऽधमः[4] प्रिये ॥ २३ ॥
हेमजीर्णे भस्मसूते[5] रुद्रत्वं भक्षिते[6] व्रजेत् ।
विष्णुत्वं तारजीर्णे तु[7] ब्रह्मत्वं भास्करेण तु ॥ २४ ॥
तीक्ष्णजीर्णे धनाध्यक्षः सूर्य्यत्वं चपलाशये तु[8] ।
वाजरे तु[9] शशाङ्कत्वम् चमरत्वं तु रोहके[10] ।
सामान्येन तु तीक्ष्णेन शक्रत्वं प्राप्नुयान्नरः ॥ २५ ॥
एवं यो लोहजीर्णं तु भक्षयेद्भस्मसूतकम्[11] ।
जलेन जलरूपः स्यात्[12] स्थलेन स्थलतां व्रजेत् ॥ २६ ॥
तेजोऽधिके तथा तेजः वायोरप्यधिको बली ।
हर्त्ता कर्त्ता स्वयं साक्षात् शापानुग्रहकारकः ॥ २७ ॥

---

(1) B and D read पूर्वमेवं. (2) D reads वज्रचाररसो, which seems to be incorrect. (3) K reads उत्तमः. (4) B reads erroneously तारजीर्णसमः. D reads ताराजीर्णोधमः, which is also incorrect. (5) हेमजीर्णो भस्मसूतो, a variant in D. हेमजीर्णो भस्मसूतं, a variant in K. (6) D reads भक्षितं. K reads भक्षितो. Both are incorrect. (7) B reads तारजीर्णस्तु. D reads विष्णुत्वं तारजीर्णे तु, wherein the first term is incorrect. (8) B has सूर्यत्वं तु पटागले. D has सूर्यत्वं च प्रतन्वते. K has सूर्यत्वं चपगले. (9) D reads वीजरे तु, which is incorrect. (10) This charaṇa is not found in D. K has चमरत्वं तु मारोहके, which seems to be incorrect. (11) B reads सूतके, which seems to be incorrect. (12) B has जलरूपं च D has जलरूपस्तु (जलरूपः तु).

यत्र[1] मूत्रपुरीषं तु साधकस्तु परित्यजेत्[2]।
पाषाणो ह्यमयं तत्र स्पृष्टं भवति काञ्चनम्[3] ॥ २८ ॥
प्रस्वेदस्तस्य[4] गात्रस्य लोहाष्टौ च वेधयेत्।
तत् सर्व्वं कनकं नित्यं[5] भक्षिते द्वादशे[6] पले।
तद्रतुल्यो महादेवि अजरामरकारिणि[7] ॥ २९ ॥
भस्मसूतं तथा तारं[8] भक्षयेत् षोड़शं पलम्[9]।
अथवा तारजीर्णं तु भक्षयेद्रस्मसूतकम्।
शुल्वञ्च वङ्गघोषं च[10] तत्स्वेदात् तारतां व्रजेत् ॥ ३० ॥
अथवा[11] तीक्ष्णजीर्णं तु भक्षयेद्भस्मसूतकम्।
मूत्रेण तस्य स्पृष्टं तु वङ्गं व्रजति[12] तारताम् ॥ ३१ ॥
एकैकेन निषेकेण[13] स्तम्भनं नागवङ्गयोः[14] ॥ ३२ ॥
गुञ्जामात्रं[15] रसं देवि हेमजीर्णं तु भक्षयेत्।

---

(1) D and K read यस्य, which seems to be incorrect. (2) D has साधकस्य प्रयोजयेत्. (3) This hemistich is not found in K. (4) D reads प्रवेपादाख्य. (5) D reads नीला. (6) भक्षिपेद्वादशे, a variant in D. (7) K reads अजरामरकारणं. (8) This hemistich is not found in D. (9) B reads षोड़शे पले, which is grammatically incorrect. This hemistich is not found in D. (10) This hemistich and the next one are not found in B. D reads शुल्वोषधं वङ्गघोषे. K reads शुल्वोघं. (11) D reads अथवा. (12) B and D read भवति, which is incorrect. [व्रजति is the correct reading.] (13) D reads निषेकेन. K reads विशेकेन. Both are incorrect. (14) B reads नागवंशयोः. D reads स्तम्भनं. (15) B reads गुञ्जामात्रं [मात्रं].

द्विगुणां तारजीर्णस्य रविजीर्णस्य तत्त्रयम्[1] ॥ ३३ ॥
तीक्ष्णाभ्रकान्तमाषैकं[2] गुञ्जैका द्राविका भवेत्[3] ।
वज्रवैक्रान्तजीर्णं तु भक्षयेत् सर्पिषान्वितम्[4] ॥ ३४ ॥
नागं वङ्गं रसं भस्म[5] विषोपविषसंयुतम् ।
मात्रायुक्तं तथैव[6] भक्षयेच्च रसायने[7] ॥ ३५ ॥
हेम तारं तथा कान्तं जायतेऽग्निसहं क्रमात् ।
स च रसराजोऽयं देहसिद्धिं प्रदापयेत् ॥ ३६ ॥
वज्रायस्कान्तमाक्षीक-वैक्रान्ताभ्रककाञ्चनैः ।
एतैर्जीर्णैर्यथालाभं रसः शस्तो रसायने[8] ॥ ३७ ॥
षड्भेवोपरसांश्चैव[9] भक्षणार्थं च वाहयेत्[10] ।
भक्षणात्तीक्ष्णजीर्णस्य[11] पलमेकं तु भक्षयेत्[12] ॥ ३८ ॥
दशवर्षसहस्राणि वज्रकायः स जीवति[13] ॥ ३९ ॥
एवञ्च द्वादशपलं तीक्ष्णजीर्णं तु भक्षयेत् ।

---

(1) B has चतुर्गुणाः वपुर्जीर्णस्य, which destroys the metre. (2) D has an incomplete charana—तीक्ष्णाभ्रकान्त. K has तीक्ष्णाभ्रकान्तमपि. (3) B reads द्रवती. D wants this charaṇa. K reads द्रावकी, which is not gram. correct. (4) संशैश्च सर्वपयोन्वितम्, a variant in D. K reads सर्पिषोन्वितम्. (5) D has नागवङ्गवज्राकोट. K has नागं वंगं वज्रा किट्टि. (6) मूत्रयुक्तं हेमवंग is the reading in D. मूत्रयुक्तं वंग is the reading in K. (7) D has लभेत कश्चिद्रसायने. K wants this charaṇa and the next eleven ones. (8) The ślokas 36th and 37th are not found in D. (9) षड्भैरेऽप्युपरसाश्चैव, a variant in D. (10) B reads न वाहयेत्. D reads चारयेत्. (11) भक्षणात्तस्य तीक्ष्णं तु, a variant in D. (12) भक्षयेत् भक्तिकात्रयम्, a variant in D. (13) This hemistich and the next one are not found in D.

एवं जीवेन्महाकल्पं[1] महायान्ते शिवं व्रजेत् ॥ ४० ॥
भस्मनः शुल्वजीर्णस्य पलैके लक्षमायुषः ।
द्विपले कोटिरायुष्यं त्रिपले ब्रह्मणायुषम्[2] ॥ ४१ ॥
चतुःपले वैष्णवायुः रुद्रायुः पञ्चमे पले ।
षष्ठे पले च संप्राप्ते महाकल्पं स जीवति[3] ॥ ४२ ॥
भस्मनो हेमजीर्णस्य पलेन ब्राह्ममायुषम्[4] ।
द्विपले वैष्णवायुष्यं रुद्रायुस्त्रिपलेन तु[5] ।
चतुःपलेन देवेशि शिवत्वं प्राप्नुयान्नरः[6] ॥ ४३ ॥
हेमजीर्णे भस्मसूते[7] त्रिपले भक्षिते क्रमात्[8] ।
अष्टाशीति[9]सहस्राणि योगिन्यो बलदर्पिताः[10] ।
तस्य तिष्ठन्ति[11] किं कार्य्यं कामरूपी भवेन्नरः ॥ ४४ ॥
यद्यद्भावयते रूपं तत्तद्रूपधरो[12] भवेत् ।
मितैः पलैकादशभिः[13] हेमभस्मानि[14] भक्षयेत् ॥ ४५ ॥

---

(1) एव जीव महाकावे, a variant in D. (2) B reads ब्रह्मणायुतं. (3) This śloka is not found in D. (4) This hemistich is not found in D. K reads पल ब्रह्मपलायुतं, which has no sense. (5) K reads erroneously जीपलेन. (6) शिवत्वं समवाप्नुयात्, a variant in D. शिवतत्वमवाप्नुयात्, a variant in K. (7) D reads हेमजीर्णं भस्मभूते, which is partly incorrect. (8) B reads erroneously त्रिफले. त्रिपक्षेण इति क्रमात्, a variant in D. (9) अष्टाशीति is the incorrect reading in K. (10) D reads बलिदायिने, which is senseless. (11) K reads तिष्ठ तिष्ठति, which is incorrect. (12) D reads तत्तद्भावधरो. (13) जीर्णैः पलैकादशभिः, a variant in B. मितैः पलैर्वा दशभिः, a variant in D. (14) D reads हेमभस्मभि. K reads हेमभस्मापि.

गुप्तकामाद्रं देवेशि ग्लात्वा चाग्निवशं गिजम्[1] ।
घृतेन मधुनाच्छाद्य[2] ताम्बूलं कामिनीर्भजेत्[3] ॥ ४६ ॥
एको हि दोषः सुश्रोऽयं भक्षिते भस्मसूतके[4] ।
निसमाहं वरारोहे कामान्धो जायते नरः[5] ॥ ४७ ॥
कामिनीनां सहस्रं तु क्षोभयेद्दिवसान्तरे[6] ।
नारीसङ्गाद्[7]वरारोहे देहे क्राम्यति[8] सूतकः ॥ ४८ ॥
नारीसङ्गे[9] वरारोहे ह्यजीर्णं तस्य जायते ॥ ४९ ॥
मैथुनाद्यलिते शुक्रे[10] निसमाद्यावधि[11] क्रमात् ।
जायते प्राणसन्देह[12]स्तस्मात्तन्मैथुनं त्यजेत्[13] ॥ ५० ॥
युवत्या अल्पनं कार्यं युवत्या चाङ्गमर्दनम्[14] ।
यस्याः[15] स्पर्शनमात्रेण रसः क्राम्यति[16] विग्रहे ॥ ५१ ॥
यथा कामोऽभ्युदयति[17] सुस्त्रीरूपनिरीक्षणात् ।

---

(1) D has क्लान्विनवं निषेत्, which is incorrect. (2) D reads छाद्या, which is incorrect. (3) D reads भवेत्, which is not correct. (4) भक्षते भस्मसूतकम्, a variant in D. (5) D reads पुनः, which is not accurate. (6) K reads भक्षयेद्दिवसांतरे. (7) D reads नारीसंग, which is incorrect. (8) K reads क्रामति. (9) D reads नार्द्धसंगे, which is incorrect. (10) D reads चलते शुक्रः. (11) चौसमाद्या-चतः, an incorrect variant in D. K has निसमाद्यादयः. (12) D reads erroneously जायते प्राणसन्देहे. (13) तावन्मैथुनं संत्यजेत्, a variant in D. तावंतं मैथुनं त्यजेत्, wherein the first term is incorrect. (14) D reads चाङ्गमङ्गनम्. K reads मर्द्दिनं. Both are incorrect. (15) K reads नारी. (16) K reads क्रामति. (17) K has यथांशादयती.

तथा[1] क्राम्यति देवेशि सुतकोऽसौ तत:[2] क्रमात् ॥ ५२ ॥
अश्वत्थपत्रसदृशो[3] भगो यस्या: सम: शुभ:[4] ।
तादृश्या: सुरतं[5] देवि भाजनं तु रसायने ॥ ५३ ॥
निर्मांसश्चैव दीर्घश्च भग: शुष्कशिरास्तथा ।
सदा दारिद्र्यकर्त्तारं वर्ज्जयेत्तं रसायने[6] ॥ ५४ ॥
अर्च्चेश्च तर्पयेन्नित्यं[7] मद्यमांसं निवेदयेत्[8] ।
योगीन्द्रान् योगिनीर्मन्त्रै:[9] पूजयित्वा क्षमापयेत् ।
कक्षाराष्टकवर्गेस्तु[10] कट्वम्ललवणं त्यजेत् ॥ ५५ ॥
अभ्रजीर्णपलेनैव[11] व्याधिभिर्नाभिभूयते[12] ।
द्वितीये बुद्धिवृद्धि:[13] स्यात् तृतीये बलवान् भवेत् ॥ ५६ ॥
चतुर्थे पलितं हन्ति[14] वलीं जयति पञ्चमे[15] ।
षष्ठे श्रुतिधरो वाग्मी सप्तमे नेत्ररोगजित्[16] ॥ ५७ ॥

---

(1) D reads तथ. (2) D reads सुतकी सैवत:, which is incorrect. (3) मद्दुपद्रया बस, an absurd variant in D. (4) यस भीगसर्म ग्रभ:, an incorrect variant in D. (5) D has तादृशांतारसो. K has तादृशासु-रसो. Both are unintelligible. (6) This śloka is not found in D. (7) आदित्यान्पुगे नित्यं, a variant in D. (8) मद्यभागं न वैदयेत्, a variant in D. (9) यागोद्राव्योगिनी मन्त्रं, a variant in D. योगींद्रा योगिनी मंत्र, a variant in K. Both the readings appear to be incorrect. (10) D has कक्षाराष्टकवर्गे तु. K has कक्षाराष्टकवर्गे तु. (11) पद्यलाभप्रयोगेण, a variant in D. (12) व्याधिना नाभिभूतये, a partly correct variant in D. (13) K reads बलवृद्धि:. (14) न नाति पलितवान्, an incomplete variant in K. (15) वलितं जितपञ्चमे, a variant in D. वलिर्गजितपञ्चमे, a variant in K. Both are incorrect. (16) मेधरोगजत्, a reading in D.

अष्टमे तालवृद्धिः[1] स्यात् ब्रह्मायुर्ब्रह्मविक्रमः ।
नवपलोपयोगेन[2] सुरमेलापको भवेत् ॥ ५८ ॥
दशपलप्रयोगेण[3] द्वितीयः शङ्करो भवेत् ॥ ५९ ॥
रसवीर्य्यस्य रक्षार्थं बलिं दद्याद्दिने दिने ।
जपेन्मृत्युञ्जयं मन्त्रं रससिद्धिः प्रजायते ॥ ६० ॥
समे तु विमले जीर्णे यो रसं भक्षयेन्नरः[4] ।
दशवर्षसहस्राणि स जीवेत् परमेश्वरि[5] ॥ ६१ ॥
द्विगुणे विमले जीर्णे दशलक्षं स जीवति ।
त्रिगुणे विमले जीर्णे दशकोटिं च जीवति[6] ॥ ६२ ॥
जीर्णे चतुर्गुणे देवि[7] रसः खेचरतां नयेत्[8] ।
ततः पञ्चगुणे जीर्णे स्पर्शवेधी[9] महारसः ॥ ६३ ॥
यादृशं विमले जीर्णे[10] तादृशं हेम-माक्षिके[11] ।
तत् फलं लभते देवि तस्य वीर्य्ये स जीवति[12] ॥ ६४ ॥

---

(1) बालवृद्धिः, a reading in D. (2) नवमे पुत्रोपयोगेन, a variant in D. नवमे त्रोपयोगेन, a variant in K. (3) D reads दशमे प्रयोगेन, which is incomplete. K reads दशाल्लप्रयोगेन, which is incorrect. (4) रससंभक्षयेन्नरः, a variant in D. त्रिसरं भक्षयेन्नरः, a variant in K. (5) K reads परमेश्वरः. (6) This hemistich is not found in D. (7) जीर्णेश्चतुर्गुणे देवि, a variant in D. (8) This charana and the next one are not found in D. (9) D reads शतवेधी. (10) B reads जीर्णं, which is incorrect. D reads यादृशो. K reads यादृशे. (11) D and K read हेममाक्षिकौ. (12) This hemistich is not found in D and K.

पुनरन्यं प्रवक्ष्यामि वज्रभस्मरसायनम् ॥ ६५ ॥
प्रथमं जारयेत्[1] सूते गन्धकं सुरवन्दिते[2] ।
दापयेत्त्रिगुणं तीक्ष्णं समं हेम च सूतके[3] ॥ ६६ ॥
तेनैव हेमजीर्णेन वज्ररत्नं तु[4] लेपयेत् ।
बालवत्सपुरीषेण तद्वज्रं वेष्टयेत्ततः[5] ॥ ६७ ॥
बद्ध्वा पोटलिकां तेन पुटपाकं तु दापयेत् ।
तत्क्षणाज्जायते भस्म शङ्खकुन्देन्दुसन्निभम् ॥ ६८ ॥
तद्वज्रभस्म[6] सुभगे कारयेत् पिष्टिकासमम्[7] ।
तत्सूतगोलकरजो[8] गतदेहं[9] विमर्दयेत् ॥ ६९ ॥
पुनस्तद्गोलकरजो बालवत्सपुरीषकैः ।
मूषालेपं तु तेनैव अर्धाङ्गेन[10] तु कारयेत् ॥ ७० ॥
तदभेद्यमूषायां[11] मूर्च्छितं वज्रजारितम्[12] ।
फूत्काराणां सहस्रेण[13] भस्म तज्जायते क्षणात् ॥ ७१ ॥

---

(1) D reads जायते. K reads मारयेत्. (2) सवगन्धं च दीयते, a variant in D. K has an incomplete charaṇa – गंधते. (3) D reads सहसे स च सूतकम्, which is incorrect. K reads समहेमो च सूतकं, which is also incorrect. (4) D reads वज्रकं ता तु, which is senseless. (5) This hemistich and the next one are not found in D. (6) D and K read तद्भस्मवज्र, which is grammatically incorrect. (7) D has चर्चयेत् पिष्टिका: समम्. K has चर्चयेत् पीष्टिकासमं. (8) तत्सूतगोलकं भाग, a variant in B. (9) K reads गतदेहं. (10) D reads प्रर्धाङ्गेन; which is incorrect. B reads अर्धोऽङ्गेन. (11) B reads अभेदद्यमूषायां. D has an incomplete charaṇa—अभयेदेव. (12) B reads वज्रजारिते. D reads वज्रामारितं. Both are incorrect. (13) B and D read सहस्रे च.

षडर्धैः[1] प्राप्यते भस्म गोक्षीरसदृशं प्रिये ॥ ७२ ॥

क्षेत्रे धृतं[2] च यत्नात्तं कङ्गुणीतैलसंयुतम् ।

चित्रकाद्याहाररोहे कायसिद्धिस्तु[3] जायते ॥ ७३ ॥

तिलमात्रं वज्रभस्म हेमभस्म च तत्समम्[4] ।

समेतकर्पूर[5]संलिप्तं वलीपलितनाशनम् ॥ ७४ ॥

शुद्धहेम पलान्यष्टौ मृत[6]सूतसमायुतम् ।

मर्दयेन्मध्यमाम्लेन गोलको भवति क्षणात् ॥ ७५ ॥

वर्षं च प्राप्यते भस्म गोक्षीरसदृशं प्रिये[7] ॥ ७६ ॥

मृतवज्रस्य भागैकं गोलभागचतुष्टयम्[8] ।

मर्दयेत् तप्तखल्वेन भस्मीभवति सूतकः ॥ ७७ ॥

मारयेद्भूधरे यन्त्रे सप्तसंकलिकाक्रमात् ।

तद्भस्म तु[9] पुनः पश्चात् मध्यमाम्लेन मर्दयेत् ॥ ७८ ॥

पुटं दद्यात् प्रयत्नेन षष्ट्यधिकशतत्रयम् ।

तद्भस्म जायते देवि[10] सिन्दूरारुणसन्निभम् ॥ ७९ ॥

तद्भस्म पलमात्रं तु लिह्यान्मध्वाज्यसंयुतम् ।

लिह्यादेवं सप्तवारं क्षीराहारो जितेन्द्रियः ॥ ८० ॥

---

(1) D reads षडंशि. B reads षण्मासैः. (2) D reads धृतं. (3) D reads कायसिद्धिश्च. (4) तत्समांशं समेचयेत्, an incorrect variant in D. (5) B reads समे कर्पूर. (6) D has भूतं. K has हुतं. (7) This hemistich is not found in D. वर्ष वर्षे प्रयच्छतो भस्म गोक्षीरसदृशं, a variant in K. (8) गोलाभागचतुष्टयी, a variant in B. गोलभागा is the reading in D. (9) D reads तद्भस्मकन्तु, which is grammatically incorrect. (10) तद्वर्णं जायते दिव्यं, a variant in D and K.

द्वितीये सप्तमे चैव[1] भक्षयेच्च पलद्वयम्[2] ।
अनया क्रमवृद्ध्या तु[3] भक्षयेत् सप्तसप्तकम्[4] ॥ ८१ ॥
तद्वृद्ध्या[5] जायते सिद्धो[6] दिव्यतेजा भवेन्नरः ।
वज्रायुषं भवेत्तस्य[7] खेचरत्वं[8] न संशयः ॥ ८२ ॥
तस्य मूत्रपुरीषाभ्यां शोधाद्यष्टौ च काञ्चनम्[9] ॥ ८३ ॥
तद्भस्मपलमेकं तु क्रामणेन समन्वितम् ।
कृष्णाष्टादशसाहस्र-पलमाने भुजङ्गमे ।
जायते कनकं दिव्यं देवाभरणभूषणम् ॥ ८४ ॥
कान्तचूर्णपलान्यष्टौ पलान्यष्टौ रसस्य च ।
एकीकृत्याथ संमर्द्य बीजपूराम्लमर्दितम् ।
मर्दयेत्सप्तयत्नेन गोलको भवति क्षणात् ॥ ८५ ॥
मृतवज्रस्य भागैकं गोलभागचतुष्टयम् ।
एकीकृत्याथ संमर्द्य भस्मीभवति सूतकः ॥ ८६ ॥
मारयेद्भूधरे यन्त्रे सप्तसंकलिकाक्रमात् ।
तद्भस्मभागमेकन्तु भागैकं गन्धकस्य च ।
अन्धमूषागतं ध्मातं खोटो भवति तत्क्षणात् ॥ ८७ ॥
द्वात्रिंशन्मृतखोटस्य ब्रह्मबीजस्य विंशतिः ।

---

(1) B reads सप्तके चैव. K reads सप्तमेनैव. (2) B has भक्षयेद्-यवद्वयम्. (3) B reads erroneously चनेन क्रमवृद्ध्या तु. D has an absurd variant प्रथया क्रमपथ्या च. (4) K reads सप्तसप्तकं, which is incorrect. (5) D and K read वर्धते. (6) K reads सिद्धिः. (7) B reads भवेत्तेन. (8) K reads चमरत्वं. (9) The following nineteen hemistichs are not found in D and K.

तारं ताम्रं व्योमसत्त्वं कान्तसत्त्वं चतुर्थकम् ।
एकैकं द्वादशांशाः स्युः सर्व्वमेकत्र कारयेत् ॥ ८८ ॥
अन्धमूषागतं ध्मातं खोटो भवति तत्क्षणात् ।
द्वाविंशन्मिलतः खोटात् सूक्ष्मचूर्णं तु कारयेत् ॥ ८९ ॥
तत् खोटसूक्ष्मचूर्णं तु धारोटरससंयुतम् ।
मर्द्दयेच्च प्रयामात्रेण गोलको भवति क्षणात् ॥ ९० ॥
गोलकस्य पले द्वे च मृतकान्तस्य तत्समम् ।
एकीकृत्याथ संमर्द्य मेघनादरसेन च ।
मुनिपुष्परसेनैव दिनमेकं च मर्द्दयेत् ॥ ९१ ॥
गुटिकाः[1] कारयेद्देवि षष्ट्यधिकशतत्रयम्[2] ॥ ९२ ॥
तत्रैकां गुटिकां सर्पिस्त्रिफलामधुसंयुताम् ।
भक्षयेद्वर्षमेकं तु ब्रह्मायुर्जायते नरः ॥ ९३ ॥
सर्व्वास्ता भक्षयेत् पश्चात् रुद्रायुः स भवेन्नरः[3] ॥ ९४ ॥
चयैका धारिता वक्त्रे[4] गुटिकामरसुन्दरि ।
हठाद्रोगाणि कृत्स्नानि[5] पलितानि च नाशयेत् ॥ ९५ ॥
उपचारं प्रवक्ष्यामि वज्रसत्त्वरसायने[6] ॥ ९६ ॥
वज्रभस्मस्तु यो[7] देवि रसोऽयं वज्रतां नयेत् ।

---

(1) B reads वुटिकां. (2) B reads सप्तकम्. (3) This hemistich is not found in D and K. (4) चटैका धारिते वक्त्र, an incorrect variant in B. This hemistich is not found in K. (5) रोगाणि is grammatically incorrect. [रोगान् is the correct term]. (6) वज्रभक्षरसायनं, a variant in B. वज्रात् सत्वं रजायते, a variant in D. (7) D reads erroneously वज्रबन्धसपो.

तेन बद्धास्तु ये देवास्ते देवा वज्ररूपिणः ॥ ९७ ॥
तिलमात्रं रसं[1] देवि ब्रह्मायुर्दश[2] जीवति ।
यवमात्रं रसं देवि विष्णुकोटिं स जीवति[3] ॥ ९८ ॥
गुञ्जामात्रं तु[4] देवेशि महाकल्पायुषो भवेत् ।
माषमात्रं वरारोहे मम तुल्यगुणो भवेत् ॥ ९९ ॥
मन्त्रहीनेन[5] सुभगे न स गम्यो[6] भविष्यति ।
न सिद्धिसाधनं[7] तस्य जन्मकोटिशतैरपि ॥ १०० ॥
मूढ़चित्तो भ्रमत्येव कुलशासनवर्ज्जितः[8] ॥ १०१ ॥
तस्य विघ्न[9]सहस्राणि कुर्व्वते[10] देवदानवाः ।
देव्यश्चाकाशगामिन्यो भूचर्य्यश्च[11] सुरेश्वरि ॥ १०२ ॥
स्वप्ने तं भजयित्वा तु[12] रेतोरक्तं चरन्ति ताः[13] ।

---

(1) B and D read तिलमात्ररसो. [Here भक्षयित्वा is to be understood.] (2) D reads ईश, which is incorrect. (3) This hemistich is not found in B and D. (4) B reads गुञ्जामात्रेण. (5) B reads मन्त्रहीने. (6) B reads मग्निवाला, which is unintelligible. K reads माम्रनाथ. (7) D reads न सिद्धिः साधनं. (8) मूढ़चित्ता भ्रमन्त्येवा, a partly incorrect variant in D. मूढ़ार्चिता भ्रमन्त्येतु, an incorrect variant in K. (9) D and K read विघ्ना, which is incorrect. (10) D and K read कुर्व्वति, which is inc. (11) D reads भूचर्य्यस्य, which is not correct. (12) स्वप्नं ते य भजयित्वा, a variant in B. स्वत्वं भजयित्वा तु, an incomplete charana in D. स्वप्ने तोयं जयित्वा तु, a variant in K. (13) B has रक्तोरक्तं चरति ये, an incorrect variant. D has रेतोरक्तचरि प्रिये, K has रक्तोरक्तचरः प्रिये. Both are incorrect.

तेनैव रेतोमार्गेण[1] हरन्ते भक्षितं[2] रसम् ॥ १०३ ॥
भास्वराख्या मया देवि गच्छन्ति निजरूपतः[3] ।
अणिमस्य तु रूपेण देवा वै गच्छयन्ति च[4] ॥ १०४ ॥
पिशाचा वैश्यरूपेण[5] शूद्ररूपेण[6] राक्षसाः ।
अन्ये मानुषरूपेण भजन्ते स्वपनान्तरे[7] ॥ १०५ ॥
अस्थिमांसानि खादन्ति स्वप्नेषु[8] सुरसुन्दरि ।
स्वप्नान्ते प्राप्यते भ्रांतिः[9] प्रायः पश्यति मानवः[10] ।
वज्रभस्म हरन्त्येव[11] स्वप्नान्ते क्षोभयन्ति च ॥ १०६ ॥
भक्षिते हेमविमले पलायन्ते दिशो दश ।
भूतप्रेतपिशाचाश्च शाकिन्यो गुह्यकादयः[12] ॥ १०७ ।
वज्राणां मारणे ये तु[13] क्षोटानां वा रसस्य तु[14] ।

---

(1) D reads हेमार्गेण, which is absurd. (2) B reads रक्षितां, which is incorrect. D and K read रंक्षितं भक्षितो, which is also incorrect. (3) गर्भभीतीजरूपतः, an incorrect variant in K. (4) देवि वेदेन भजन्ति, an absurd reading in D. देवि वेर्भयन्ति च, an incorrect and incomplete charana in K. (5) D and K read विप्ररूपेण, which is incorrect. (6) D reads यज्ञरूपेण. K reads शूद्ररूपेण. Both are incorrect. (7) भुज्यते स्वप्नान्तरे, an incomplete variant in B. D reads भजती, which is incorrect. K reads भुंजंते, which is also incorrect. (8) B reads स्वप्ने षि. (9) D reads मापयेत्तेन. K reads प्राप्य एतेन. (10) पश्यन्ति मानवैः, a variant in D. (11) वज्रभक्षोदरं वेन, a variant in D and K. (12) B reads शाकिन्यो. K reads किन्नरी. (13) B reads मारणं वै तु. D reads वज्रिणां मारणं तुच्छं. K reads मरणां तु. (14) वजमाररसस्य च, a variant in D, which seems to be incorrect.

वर्ज्जनीयाः प्रयत्नेन[1] प्रयुक्तांस्तान् शृणु[2] प्रिये ॥ १०८ ॥
तेषां युक्तिप्रकारास्तु[3] प्रयुक्ता युक्तिदायकैः[4] ।
एवं वदन्ति भूताद्या भीषयन्ति स्म तं नरम्[5] ॥ १०९ ॥
रञ्जको रागकारी[6] स्यात् क्रामणः क्रामणे स्थितः[7] ।
बन्धका दृढ़कारास्च[8] तथा पुष्टिकराः स्मृताः[9] ॥ ११० ॥
शुक्रशोणितविण्मूत्रे विविधेन तु भक्षयेत् ।
कुष्ठव्याधिकरं तच्च[10] नागवङ्गकलङ्कितम्[11] ॥ १११ ॥
त्रिफलाजातिकङ्कोलं कर्पूररसमिश्रितम् ।
खदिरं समतोयेन मर्द्दितं भक्षयेद्रसम् ॥ ११२ ॥
पयसा कटुकं दृष्टा[12] पथ्यं[13] क्रामणमुत्तमम् ।

---

(1) ते वर्जनीया यत्नेन, a variant in B. (2) B has प्रयुक्ता-श्रवण. D has प्रसक्तास्रवणा. K has प्रयुक्ताः श्रवण. (3) तेषां युक्तिकरा ये तु, a variant in B and K. (4) प्रयुक्ता युक्तिकादयः, a variant in B. प्रयुक्तं युक्तिकादयः, a variant in D. (5) This hemistich is not found in D and K. (6) B reads रंजिको. D reads रणकारी. Both are incorrect. (7) क्रामणोन्क्रामणोदितम्, a variant in D. K reads erroneously क्रामणो क्रामणे. (8) बद्धका दृढ़कायाश्च, a variant in B. D reads बन्धको. बद्धा दृढ़करास्चैव, a variant in K. (9) B reads मताः. (10) कुष्टव्याधिकरं चैव, a variant in D. कुष्टव्याधिकरी ताश्च, a variant in K. (11) नागवंगकलच्छितौ, a variant in D. आगवंगकलंकितौ, a variant in K. (12) D reads दृष्टा, which is incorrect. (13) D and K read बध्यं.

स्तम्येन हेमघृष्टेन न खाद्योऽयं[1] सुरेश्वरि ॥ ११३ ॥
चलम्बुपायस्तास्तस्य[2] तालकस्य[3] च भक्षणात् ।
देहे[4] क्रामति सूतेन्द्रो नात्र कार्या विचारणा ॥ ११४ ॥
अवश्यं क्रमते सूतः स्त्रीयोगी क्रामणं परम् ।
ब्रह्मचर्य्येण वा योगी[5] सदा सेवेत[6] सूतकम् ॥ ११५ ॥
समाधिः कारणं तत्र[7] क्रामणं परमं मतम् ॥ ११६ ॥
प्रभाते भक्षयेत् सूतं[9] पथ्यं[9] यामद्वयाधिके ।
नो लङ्घयेत् त्रियामं तु मध्याह्ने न तु[10] भोजयेत् ॥ ११७ ॥
अतिपानं चात्यशन[11]-मतिनिद्रातिजागरम् ।
स्त्रीणामतिप्रसङ्गं चात्यध्वानं च विवर्जयेत्[12] ॥ ११८ ॥
अतिकोपं चातिहर्ष-मतिलौल्य-मतिस्पृहाम्[13] ।
शुष्कवादं जलक्रीडामतिचिन्तां च वर्जयेत्[14] ॥ ११९ ॥
कुष्माण्डं कर्कटीं चैव कालिङ्गं[15] कारवेल्लकम्[16] ।

---

(1) B has न खंडोयं. D has खण्डेयर. K has न खंडोयं. (2) D reads चलंबुमायसंकाशं, which is incorrect. (3) D reads तालकस्य, which seems to be incorrect. (4) B reads देहं. (5) D and K read ब्रह्मचर्यं न वा कुर्यात्. (6) D and K read पादाग्निनैव. (7) D and K read तस्य. (8) D and K read सूते, which is incorrect. (9) D reads पत्र, which is incorrect. (10) B reads मध्ये न तु, which is incomplete. (11) D reads चात्ययान. (12) वचनं चाति वर्जयेत्, a variant in D and K. (13) B reads यतीनदं. D reads मनस्पृहं. Both are incorrect. (14) चतिशोचां विवर्जयेत्, a variant in D. (15) D reads कलिङ्गं (16) K reads कारवल्लिका.

कुसुम्भकञ्च कर्कोटं[1] कदली काकमाचिकाम्[2] ।
कङ्काराष्टकमेतद्धि वर्जयेद्गुरुभक्तकः[3] ॥ १२० ॥
पातकं च न कर्त्तव्यं पशुसङ्गं विवर्जयेत्[4] ।
लिङ्गच्छायां[5] न लङ्घेत नारीच्छायां तथैव च[6] ॥ १२१ ॥
चतुःपथे न गन्तव्यं[7] विण्मूत्रं न च लङ्घयेत् ।
सुराणां निन्दनं देवि[8] स्त्रीणां निन्दां च वर्जयेत्[9] ॥१२२॥
सत्यं च वचनं ब्रूयादप्रियं न वदेद्बुधः[10] ॥ १२३ ॥
कुलत्थमतसीतैलं तिलान् माषान् मसूरकान्[11] ।
कपोतकं काञ्जिकाञ्च तक्रभक्तं च वर्जयेत् ॥ १२४ ॥
काङ्क्षतीक्ष्ण[12]लवणं पिच्छिलं[13] पित्तलं च यत् ।
तिलतैलं दधि क्षीरं[14] द्राक्षाकोलपरूषकम्[15] ॥ १२५ ॥
बदरं कारविल्लञ्च[16] सहकारं सुवर्च्चलम् ।

(1) कुसुम्भं काचककौटं, a variant in D. K reads कुम्भोककौटी, which is incomplete. (2) B reads काचमारीका, which seems to be incorrect. (3) B reads भक्तभक्तकः. (4) पशुसंगं च वर्जयेत्, a variant in K. (5) K reads लिंगच्छायां. (6) B reads न लङ्घयेत्. (7) B reads न कर्त्तव्यं. (8) देवतानां न निर्वेदं, a variant in D. वीराश्च निंदयेद्देवि, a variant in K. (9) D reads स्त्रीणियां, which is incorrect. K reads स्त्रीनिंदां चैव वर्जयेत्. (10) दप्रियो न वदेद्बुधः, a variant in B, which is partly incorrect. (11) B reads मसूरिका. D reads मसूरिकाः. Both seem to be incorrect. (12) B reads तिक्त. (13) D and K read पिच्छलं. (14) तिलतैले दधिक्षारे, a variant in B. (15) द्राक्षाक्षो पनसं ततः, a variant in D and K. (16) B reads नारिकेलञ्च.

नारङ्गं काञ्चनारञ्च[1] शोभाञ्जनमपि त्यजेत् ॥ १२६
क्षुधार्त्तो नैव तिष्ठेत अजीर्णे नैव[2] कारयेत् ।
न वादजल्पनं[3] कुर्य्यात् दिवास्वापं न कारयेत्[4] ॥ १२७ ।
नैवेद्यं नैव भुञ्जीत कर्पूरं वर्ज्जयेत् सदा ।
कुङ्कुमालेपनं वर्ज्ज्यं वर्ज्जयेदटनं चिती ॥ १२८ ॥
नाग्निं स्पृशेत्तु[5] पादेन न गा वा[6] ब्राह्मणांश्च च ।
न हन्यात्तु कुमारीं च वातुलानपि[7] वर्ज्जयेत्[8] ॥ १२९ ॥
दिवारात्रं जपेन्मन्त्रं स्नातव्यं च दिने दिने ॥ १३० ॥
हितञ्च मुद्गा[9] दुग्धान्नं शाल्यन्नं च समाहितम्[10] ।
शाकं पौनर्नवं[11] देवि मेघनादं च वास्तुकम् ।
सैन्धवं नागरं मुस्तां पद्ममूलानि भक्षयेत् ॥ १३१ ॥
उच्चिमचूचुका[12] श्यामा सुरूपा सुभगा शुभा ।

---

(1) B reads चिनारंग. (2) K reads न च. (3) B reads वादजल्प, which renders the charana incomplete. (4) दिवाचारी पर्यटेत्, a variant in B. (5) D reads स्पृशेत, which is grammatically incorrect. (6) B, D and K read न गावो, which is grammatically incorrect. (7) B reads मातुलानीं. D reads मातुलान which is incorrect. (8) After this śloka we find in B the following hemistich कुर्य्यात्तनैव तिष्ठेत अजीर्णे न च कारयेत्, which we have rejected the first charana being absurd, and the second being a repitition (9) K wants मुद्गा. (10) B, D and K read समाहितः, which is not accurate; समाहितं here means विशोधित and qualifies शाल्यन्नं. (11) D reads पुनर्नवं. K reads शाकं च पुनः, an incomplete charana. (12) D reads erroneously उद्गत चूचुका.

दिव्यतेजःसमायुक्ता कामशक्तिविवर्द्धिता[1]।
सन्निधाने च कर्त्तव्या ह्रन्वेव[2] परिरक्षिता ॥ १३२ ॥
कृष्णागौरातिहृद्याङ्गीं[3] कुशीलां न भजेत् क्वचित् ॥ १३३ ॥
तिलकं कुङ्कुमं गन्धं[4] कस्तूर्य्या च मनोहरम्।
सुरभीणि च पुष्पाणि सुखशय्येष्टभोजनम् ॥ १३४ ॥
सुखवासित्वमेवोक्तं[5] क्रामणं सूतकस्य तु।
आत्मज्ञानकथां पूजां[6] शिवस्य तु विशेषतः ॥ १३५ ॥
एतांस्तु[7] समयान् भद्रे न लङ्घेद्रसभक्षणे।
लङ्घनादिविधं लक्ष्यं लक्षणं तस्य[8] कथ्यते ॥ १३६ ॥
रसराजे त्वजीर्णे तु[9] प्रत्ययोऽयं भवेत् प्रिये।
मूर्च्छा शोको भ्रमः कम्पः छर्द्दिर्मोहो ज्वरस्तथा[10]॥१३७॥
हिक्काविपथुशूलार्त्ति[11] निद्रालस्यमरोचकम्[12]।
लिङ्गस्तम्भो ह्यतीसारः[13] कासश्वासविजृम्भिकाः[14] ॥१३८॥
कर्णास्यचक्षुःकुक्षौ च वृषणोदर[15]मूर्द्धनि।

---

(1) B reads विवर्जिता. (2) भत्येव परिरक्षिता, a variant in D. K reads ह्रन्वेन. (3) D reads सर्वाङ्गी. K reads सर्वाणि, which is incorrect. (4) तिलकुङ्कुमगन्धं च, a variant in D. तिलकं कुमकं गंधं, a variant in K. (5) D reads मर्मोक्तं. (6) B, D and K read प्राज्ञा. (7) D reads एकतन्तु, which is incorrect. (8) D reads मच. K reads चाव. (9) रसराजे तु जीर्णे तु, an incorrect variant in D. (10) छर्दिमूर्च्छायशो ज्वरः, a variant in B. (11) D reads ज्वलनं. (12) B, D and K read भरोचकः. (13) B reads ह्यतीचारः. K reads ह्यतिसारः. (14) B reads विजृम्भकाः. (15) B reads जठरोदर.

मेढ्रे दाहोऽग्निमान्द्यञ्च[1] जातः सर्व्वाङ्गसंशयः ॥ १३८ ॥
अन्यांश्चैव महाव्याधीन् रसाजीर्णे तु[2] लक्षयेत् ॥ १४० ॥
काञ्जिकं[3] सर्जिकाक्षारं कारवल्ली[4]रसप्लुतम् ।
गोमूत्रसैन्धवयुतं[5] तस्य संक्रामणं[6] पिबेत् ॥ १४१ ॥
मोचकस्य रसं देवि राजकोषातकीरसम् ।
सिन्धुकं कृष्णगोमूत्रं कारवल्लीरसप्लुतम् ।
सौवर्च्चलसमोपेतं रसाजीर्णे पिबेन्नरः[7] ॥ १४२ ॥
रसाजीर्णे न जीवेत्तु म्रियते नात्र संशयः ।
रसायने सुजीर्णे तु तेन सर्व्वं विधीयते[8] ॥ १४३ ॥
यदा सुमस्तदङ्गं च[9] स्त्री स्तनेनैव घर्षयेत् ।
वामेन मर्द्दयेदेवं सूतः क्रामति निर्भयः[10] ॥ १४४ ॥
निवाते निर्जने स्थाने भूगृहे निरुपद्रवे ।
शीतातपविनिर्मुक्तः[11] पथ्याशी लघुभोजकः[12] ।

---

(1) मेढ्रदाहोऽग्निबंधश्च, a variant in B. मेढ्रं दाहाग्निमंदाश्च, a variant in D. मेद्दाहोग्निमंदश्च, a variant in K. (2) B reads रसाजीर्णे. K reads रसैर्जीर्णे. (3) B reads काञ्चीक. (4) B reads कारवेल्लि. D reads करवल्ली. (5) This hemistich and the next two are not found in D. K has गोमूत्रं सैन्धवं युतं. (6) K reads तस्य तं क्रामणं. (7) B reads पिबेद्रसः, which is incorrect. (8) B has स भवेत् साधु बध्यते, which has no sense. (9) ते सुतिस्तदंगंच, a variant in B. तैऽपि सुमस्तदङ्गे, a variant in D. K has an incomplete hemistich तेऽपि सुमस्ते तेनैव...येत्. (10) K wants this term. (11) D and K read विनिर्मुक्तो, which is grammatically incorrect. (12) B reads लघुभुञ्जकः. D reads शीलभुग्नरः. K reads लघुभुंजकः. All are incorrect.

यथोक्तदिवसैः[1] सिद्धिं प्राप्नुयान्नात्र संशयः ॥ १४५ ॥
सर्व्वोड्डारेण[2] दिवसैर्द्विगुणैः सिद्धिमाप्नुयात्।
सेवनाच्छीतवाताभ्यां[3] त्रिगुणैर्दिवसैः क्रमात्।
अतिमार्गस्य धर्म्मेण[4] दिवसैस्तु चतुर्गुणैः ॥ १४६ ॥
अत्र वेधं प्रवक्ष्यामि देहसिद्धिकपूर्व्वकम्[5]।
तव स्नेहेन देवेशि प्रोक्तमेव रसायनम्[6] ॥ १४७ ॥
त्वग्वेधः प्रथमं देवि[7] मांसवेधो[8] द्वितीयकः।
तृतीयो रक्तवेधस्तु[9] चतुर्थश्चास्थिवेधकः[10] ॥ १४८ ॥
पञ्चमो मज्जवेधः स्यात्[11] नाड़ीवेधस्तु षष्ठकः[12]।
सप्तमो धातुवेधश्च[13] अष्टमः कवचस्य तु ॥ १४९ ॥
त्वचावेधेन देवेशि पन्नगः कुटिलो भवेत्।
मांसवेधेन सुभगे कुटिलः काञ्चनं भवेत्[14] ॥ १५० ॥

---

(1) D reads यथोक्ता दशंये, which is incorrect. (2) D has सिद्धावड्डारेण. K has सद्यवड्डारेण. Both are incorrect. (3) B reads सेवनाच्छीतवाताभ्यां. D reads ये जना चिति वा सिद्धि. K reads सेवनाच्छिसीवाताभ्यां. All are incorrect. (4) D reads अध्वनि मार्गेस धर्मे च, which is incorrect. K reads अधान, which is also incorrect. (5) This hemistich and the next one are not found in D. (6) K reads मपूर्वत:. (7) D reads देशं, which is incorrect. (8) B reads मांसवेधी, which is not correct. D reads खवेधो, which is also incorrect. (9) D and K read चीरवेधस्तु. (10) चतुर्थश्चाथिवेधकः, an incorrect variant in D. (11) D has वज्रवेधश्च. K has वज्रवेधश्च. Both seem to be incorrect. (12) D has षष्ठमः, which is incorrect. (13) B and D read चतुर्वेधश्च. (14) This śloka is not found in D.

57

अस्थिवेधेन देवेशि तीक्ष्णं कनकतां व्रजेत् ।
मज्जवेधो[1] वरारोहे लोहान्यष्टौ च वेधयेत् ॥ १५१ ॥
कवचस्य तु वेधेन मृण्मयं काञ्चनं भवेत् ।
वेधे तु[2] हेमविमले मज्ज्ञो[3] हेम प्रजायते ॥ १५२ ॥
तारे[4] मांसं सुरेशानि जीर्णसूतश्च वेधयेत् ।
अलके[5] विमले ताम्रे तीक्ष्णे तारे च[6] भास्करे ॥ १५३ ॥
क्रामणे तु भवेत्तक्रं शर्करा माक्षिकं तथा ।
कपिलाकृष्णगोतक्रं तत्तु[7] देवि रसायने[8] ॥ १५४ ॥
सात्त्विकं गव्यतक्रं तु राजसं सारसोद्भवम्[9] ।
तामसं माहिषं[10] तक्रं देयं नैव[11] रसायने ॥ १५५ ॥
आर्द्रकस्य रसो देवि तथा पूग[12]फलानि च ।
मर्द्दनं नवनीतेन रसस्य क्रामणं परम् ॥ १५६ ॥
अधमं शाकमूलोत्थं मध्यमं फलमूलजम् ।
उत्तमं देवदेवेशि रसकं तु रसायने ॥ १५७ ॥

---

(1) B and K read मज्जावेधे. (2) B reads वेधं तु. (3) B reads मज्जनात्. D and K read मज्ज्ञानां. (4) B reads तारं. (5) D reads अलको. K reads अटको. Both seem to be incorrect. (6) K reads तीक्ष्णतारे च. (7) K reads तत्र. (8) B reads रसायनं. (9) राजसंज्ञा रसोद्भवम्, a variant in B. (10) D reads पेषितं. K reads मेषिकं. (11) B has रसे चैव. But D and K have देयं नैव. We have adopted the latter opinion, since तामस is the worst of the kind. (12) D reads तथा पूगी.

तीक्ष्णवेधेन नीलाभ:[1] ताम्रेणारुणसंप्रभ: ।
रजतेनेन्दुसंकाशो[2] हेम्ना काञ्चनसन्निभ:[3] ॥ १५८ ॥
धूमावलोकी वज्रस्थो[4] मासात् खेचरतां नयेत्[5] ।
स्पर्शवेधी तु वज्रस्थो[6] द्विमासात् सिद्धिदायक: ॥ १५९ ॥
शतकोटिस्त्रिभिर्मासै: चतुर्भिर्दशकोटिक:[7] ।
पञ्चभि: पञ्चकोटिश्च[8] षड्भि: स्यात् कोटिवेधक:[9] ॥१६०॥
एवं क्रमेण कुरुते शरीरमजरामरम् ।
अणिमादिगुणैश्वर्य्यमाज्ञासिद्धि: प्रजायते[10] ॥ १६१ ॥
सप्तभिर्लक्षवेधी स्यादष्टाभिश्चायुतं पुन:[11] ।
सहस्रं नवभिर्मासैर्दशमासै: शतं पुन: ॥ १६२ ॥
तस्य मूत्रपुरीषैस्तु श्लेष्मणाङ्गमलैस्तथा ।
लेपाद्धेमत्वमायान्ति[12] पाषाणादीनि[13] भूतले ॥ १६३ ॥
चतु:षष्ठ्यंशतो वेधी मासैकाद्दशवेधक: ।

---

(1) तीक्ष्णवङ्गेन नीलाभं, a variant in B, which seems to be incorrect. D and K read नीलाभं. (2) This charana is not found in D. (3) B reads हेम. D wants this hemistich. (4) धामावलोकी वज्रस्थो, an incorrect variant in D. (5) मासं खेचरतां व्रजेत्, a variant in D. (6) D reads वक्रस्थो, which is incorrect. (7) D reads दशकोटिभि:. K reads दशकोटय:. (8) कोटिवेधी पञ्चभिर्मासै:, a variant in D. (9) B reads दशकोटिकत्. D reads षण्मासै: instead of षड्भि: स्यात्. K reads दशकोटय:. (10) D and K read प्रवर्त्तते. (11) D has दृष्टभिश्च पुन: पुन:. (12) लेपयच्छेमत्व, an incorrect variant in D. (13) B reads यानि लोहानि.

द्वात्रिंशांशकवेधी तु[1] वर्षाद्देहं तु वेधयेत्[2] ॥ १६४ ॥
कुञ्चिताग्रास्तु यत्केशा या श्यामा[3] पद्मलोचना ।
विस्तीर्णं जघनं यस्याः[4] सङ्कीर्णं हृदयं भवेत् ॥ १६५ ॥
कृष्णपक्षे भवेद्यस्या युवत्याः पुष्पदर्शनम्[5] ।
कामिनी सा समाख्याता उत्तमा च रसायने ॥ १६६ ॥
आलिङ्गने स्पर्शने च[6] मैथुनालापयोरपि[7] ।
सर्व्वरोगविनिर्म्मुक्तो वलीपलितवर्जितः ॥ १६७ ॥
नासौ छिद्येत शस्त्रैश्च पावकेन न दह्यते[8] ।
वायुवेगो महातेजाः कामदेव इवापरः ॥ १६८ ॥
इच्छया जायते दृश्यो ह्यदृश्यश्चैव[9] जायते ।
तस्य[10] संस्पर्शमात्रेण सर्व्वलोहानि काञ्चनम् ॥ १६९ ॥
तस्मिन्नेकार्णवे घोरे नष्टस्थावरजङ्गमे[11] ।
देवा यत्र विलीयन्ते[12] सिद्धस्तत्रैव लीयते[13] ॥ १७० ॥

---

(1) द्वात्रिंशत् कोटिवेधी च, a variant in D. (2) वर्षांशा देहं वेधयेत्, a variant in D. (3) D reads श्यामा या. K wants this hemistich and the next one. (4) B reads विस्तीर्णंजघनं तस्याः, which is not accurate. (5) D reads पुष्पकर्मणि, which is incorrect. (6) आलिङ्गेन स्पर्शनेन, a variant in B. आलिंगेन स्पर्शने च, a variant in K. (7) D reads erroneously मैथुनार्थं ययोरपि. (8) पाविन च विद्यते, an incorrect variant in D. (9) संदृश्यश्चैव, a reading in D and K, which is incorrect. (10) D reads erroneously तस्याः. (11) नष्टे स्थावरजङ्गमे, a variant in D. (12) K reads विलियंते. (13) सिद्धि-स्तत्रैव जायते, a variant in D.

इदं रहस्यं परमं मया प्रोक्तं[1] सुरेश्वरि ॥ १७१ ॥
साधुसज्जनसारज्ञा रसजीर्णक्रियापराः ।
रसवादीति संप्रोक्ता[2] इतरे द्वेषवादिनः[3] ॥ १७२ ॥
पुनरन्यां[4] प्रवक्ष्यामि गुटिकां रसदुर्लभाम् ॥ १७३ ॥
वङ्गसीसकशुल्वाभ्र-हेमतारसमन्वितः[5] ।
वज्रायसादिभिर्युक्तः क्रियते वादिकैः[6] रसः ॥ १७४ ॥
सर्व्वांस्तानेकतः कृत्वा[7] मूषामध्ये स्थितान्[8] धमेत् ।
गुटिका जायते दिव्या नाम्ना वज्राङ्गसुन्दरी ॥ १७५ ॥
मुखस्था सिद्धिदा प्रोक्ता जरामृत्युविनाशिनी ॥ १७६ ॥
संग्रामे विजयी वीरो वज्रदेहो महाबलः ।
सर्व्वलोकप्रियो नित्यं नारीणां सुभगस्तथा ॥ १७७ ॥
वज्रव्योमजसत्त्वकं सकनकं[9] चन्द्रं रविं कान्तकं[10]
नागं वङ्गमथायसं[11] दृढ़तरं सूतं कृतं तत्समम्[12] ।

---

(1) B reads गोक्तं. This hemistich and the next three are not found in D. (2) B reads रसवादी इति प्रोक्ताः. K reads रसवादि इति प्रोक्तं. (3) B has दूषणवादिनं, which is incorrect. (4) K reads पुनरन्यं, which is not correct. (5) D reads समन्विते:. (6) B reads वादको. (7) B reads सर्वांस्तामेकीकृतं, which is incorrect. (8) D reads मूखामध्ये स्थिती. K reads मूखामध्ये स्थिता. Both are incorrect. (9) D has वज्राकीकनकं. K has वज्रतां सहनकं. Both are incorrect. (10) D reads चांद्र रविसम. K reads चांद्र रविं कंसकं. Both are incorrect. (11) B reads नागं वंगतीक्ष्णसुरायसं. D reads तीक्ष्णं कान्तं तदायसं. K reads तीक्ष्णं कान्त तथायसं. (12) सूतकं कृत्वा तत्समं, an incorrect variant in D.

वज्राख्यं रसगोलकं रतिकरं सर्व्वार्थदं तापदं[1]
वर्षैकेन निहन्ति दोषनिचयं कल्पायुषो जायते ॥१७८॥
पूर्व्वसिद्धरसे[2] देवि पादांशं[3] हेम योजयेत् ।
सूतवज्रपलांशेन[4] व्योमसत्त्वं प्रयोजयेत् ॥ १७९ ॥
चीरकञ्चुकितोयेन सुरदालीरसेन च ।
विधिना मर्द्दयित्वा तु नष्टपिष्टं तु कारयेत्[5] ॥ १८० ॥
कान्तचूर्णवुटिं[6] दत्त्वा मूकमूषागतं धमेत् ।
गुटिका[7] जायते दिव्या वज्राख्या सर्व्वसिद्धिदा ॥ १८१ ॥
सुभगं माक्षिकं[8] चैव वज्रमभ्रकमेव च ।
हेम शुल्वं तथा तारं[9] समभागानि कारयेत् ।
वज्रबद्धा तु गुटिका वज्राख्या सर्व्वसिद्धिदा[10] ॥ १८२ ॥
भ्रामकं माक्षिकं चैव लोहत्रयसमन्वितम् ।
मणिबीजसमायुक्तं बीजत्रयसमन्वितम्[11] ॥ १८३ ॥
विदष्टोमर्द्दितं सूतमेकीकृत्य[12] च गोलकम् ।
अन्धमूषागतं ध्मातं समावर्त्तं तु[13] कारयेत् ॥ १८४ ॥

---

(1) B reads सर्वार्थसंधापदं. D reads सर्वार्थसंतापदं. K reads सैर्वाग्नि-संतापदं. (2) D and K read पूर्वासिद्धिरसो, which is incorrect. (3) B reads पादांश. (4) B reads कलांशेन. (5) D wants this charana and the next one. (6) B reads त्रटि, which seems to be incorrect. (7) B reads घुटिका. (8) D has सुवर्ण सुभगां, which is not correct. (9) D reads तारं. (10) This hemistich and the next one are not found in K. (11) D wants this hemistich. (12) D and K read सूतमेकीकृत्वा, which is grammatically incorrect. (13) B reads समावर्त्तस्तु, which is not correct.

पूजां कृत्वा क्षिपेदग्नौ षण्मासात् स भवेत् प्रिये ।
अभयः सर्व्वशत्रूणां[1] वज्रकायो महाबलः ॥ १८५ ॥
नन्दिकेश[2]कुमाराद्या भक्ष्यमाणं हरन्ति ये ।
नष्टच्छाया न दृश्यन्ते हस्ते ददति[3] भस्म च ॥ १८६ ॥
क्रियमाणं रसं तेषु[4] मूढबुद्धिर्न पश्यति[5] ।
कथयेत् सर्व्वजन्तूनां न मे सिद्धो[6] रसायने ॥ १८७ ॥
मनसा रससिद्धिस्तु[7] तथा क्लेशो मया कृतः[8] ।
मया कृता द्रव्यहानिर्दुर्धिया[9] मूढचेतसा ॥ १८८ ॥
ईदृशं नैव जानाति[10] विधिहीनं मया कृतम् ।
पापिष्ठो दूषयेच्छास्त्रमात्मकर्म्म न विन्दति ॥ १८९ ॥
विधिहीनो रसो देवि[11] नैव सिध्येत्[12] कदाचन ॥
शास्त्रहीनस्य देवेशि नैव सिद्धिर्वरानने[13] ॥ १९० ॥
अशुभैः कर्म्मभिः सर्व्वैः[14] सम्प्रदायो न सिध्यति[15] ।

---

(1) B reads सर्व्वशस्त्राणां. (2) B and D read नन्दिस्कन्द, which is a repitition. (3) D reads ददाति, which is grammatically incorrect. (4) क्रियमाणं रसैस्तु, a variant in K, which is incorrect. (5) D reads नियच्छति. K reads न यच्छति. (6) B, D and K read सिद्धि, which is grammatically incorrect. (7) K reads रससंसिद्धिः. (8) D and K read तस्य. D reads कृतिः instead of कृतः. (9) D and K read दुःखिना, which is incorrect. (10) ईदृशं नैव जानासि, an incorrect variant in D. (11) D and K read erroneously देवी. (12) D reads सिद्धिः. (13) नैव सिद्धि रसायने, a variant in K, which is partly incorrect. (14) D reads पूर्वैः. K reads सदा:. (15) संप्रदायो न सिध्यते, a variant in B. संप्रदायेन सिध्यति, a variant in D.

न सिध्येद्रसशास्त्रे तु[1] न सिध्येत्तादृशी गुरु.[2] ॥ १८१ ॥
न प्राप्येत्तादृशीमाज्ञां[3] नैव ज्ञानं च तादृशम्[4] ।
न प्राप्येत्तादृशीं नारीमेकचित्तां वरानने ॥ १८२ ॥
न प्राप्येद्रसबन्धं च तां च देवीं रसाङ्कुशीम्[5] ।
यस्य तुष्टः शिवः साक्षात्तस्य सिद्धी[6] रसायने ॥ १८३ ॥
पुनरन्यत्[7] प्रवक्ष्यामि गोलबन्धमनुत्तमम् ।
येन भक्षितमात्रेण[8] जायते ह्यजरामरः ॥ १८४ ॥
गन्धाभ्रकान्तसहितं भानुखर्परकाञ्चनम् ।
समं तीक्ष्णं[9] रसेन्द्रस्य बद्धं कृत्वा तु गोलकम् ॥ १८५ ॥
रसेन्द्रं पञ्चपलिकं[10] समभागेन मेलयेत् ।
सप्तजम्बीरतोयेन[11] मर्दयेद्गोलकस्य च[12] ॥ १८६ ॥
छायाविशुष्कं गोलं तु ग्रथिभावं करोति तत् ।

---

(1) न सिध्येतादृशे शास्त्रे, a variant in D. (2) न सिध्येत्तादृशैर्गुणैः, a variant in D. न सिध्येता वरानने, an incorrect variant in K. (3) D reads तादृशीं विद्यां. (4) ज्ञानं स्थानं द्रव्यान तादृशं, an incorrect variant in D. This hemistich and the next one are not found in K. (5) B reads रसांकुशां. (6) K reads erroneously सिद्धि. (7) B, D and K read पुनरन्यं, which is grammatically incorrect. (8) येन च भक्ष-मात्रेण, a variant in D. येन भक्षणमात्रेण, a variant in K. (9) D reads समं जीर्णं. K reads समो जीर्णं. Both are partly incorrect. (10) रसेन्द्रं पञ्चमिलकं, an incorrect variant in D. (11) B reads सप्तमं यथा-यथा. K reads सप्तबीजं रसो येन. (12) यथा तद्गोलकस्य वा, a variant in B. गोलकस्य यथाविधा, an incorrect variant in K.

एतत् सर्व्वं विमर्द्दं तु सूतकं गोलकस्य च[1] ॥ १९७ ॥
ततः करीषाग्निना भूमौ मृदुस्वेदं तु कारयेत् ।
वस्त्रे स्थितमिदं गोलं चामरताप्रदायकम् ॥ १९८ ॥
सूतगोलकजातस्य फलं वक्तुं न शक्यते[2] ।
रसायने वर्णकरो[3] रससिद्धिप्रदायकः[4] ॥ १९९ ॥
सुगन्धलेपताम्बूल-कस्तूरीकुङ्कुमागुरु ।
श्रीखण्डं मृगनाभिश्च कङ्कोलं जातिकाफलम्[5] ।
अन्यानि च सुगन्धीनि[6] स्नाने पाने प्रदापयेत्[7] ॥ २०० ॥
[कुञ्चिताग्रास्तु यत्केशा[8] या श्यामा[9] पद्मलोचना ।
विस्तीर्णं जघनं यस्याः सङ्कीर्णं हृदयं भवेत् ॥ २०१ ॥
कृष्णपक्षे भवेद्यस्या युवत्याः पुष्पदर्शनम्[10] ।
कामिनी सा समाख्याता[11] उत्तमा च रसायने ॥ २०२ ॥
आलिङ्गने स्पर्शने च मैथुनालापयोरपि ।
सर्व्वरोगविनिर्म्मुक्तो वलीपलितवर्ज्जितः ॥ २०३ ॥][12]

---

(1) This hemistich and the next two are not found in D. (2) This hemistich is not found in B and K. (3) D reads वर्त्तकरो. K reads वातकरो. (4) This hemistich is not found in B. (5) D reads जायका फलम्. (6) B and D read सुगन्धानि. (7) स्नान-पानानि यानि तु, a variant in B. (8) आकुञ्चिताग्रा यत्केशा, a variant in D and K. (9) D reads श्यामाया, which is incorrect. K reads श्यामा या. (10) D reads erroneously पुष्पदर्शने. (11) K reads संख्याता. (12) The above three ślokas within brackets and the following two slokas within brackets seem to be a repitition of the previous ślokas—165, 166, 167, 168 and 169. As these were found in all the texts, we have kept them within brackets.

शतरोगं विनश्येत[1] मुखमध्ये धृतेषु च[2] ।
यवतुल्यप्रमाणेषु जीवेद्वर्षशतत्रयम् ॥ २०४ ॥
अथ षोडशवर्णानि[3] षोडशानि सुरेश्वरि[4] ।
धृतानि मुखमध्ये तु तेषु वक्ष्यामि ये गुणाः ॥ २०५ ॥
[नासौ छिद्येत शस्त्रेण पावकेन न[5] दह्यते ।
वायुवेगो महातेजाः कामदेव इवापरः ॥ २०६ ॥
इच्छया जायते दृश्यो ह्यदृश्यश्चैव जायते ।
तस्य संस्पर्शमात्रेण सर्वलोहानि काञ्चनम्[6] ॥ २०७ ॥]
पुनरन्यं प्रवक्ष्यामि वज्रबन्धं सुरार्चिते[7] ॥ २०८ ॥
हीनाङ्गोऽप्यधिकाङ्गश्च[8] सव्याधिः कुष्ठ आगतः[9] ।
नताङ्घ्रिः[10] पाणिनिःसूतो[11] जरया क्षोभितेन्द्रियः[12] ।
जड़गद्गदमूकोऽपि[13] गतिहीनस्तथैव च[14] ।

---

(1) B reads शतधृतेषु पश्चादयम्, which has no sense. (2) K reads मुखाभ्यासे धृतेऽथवा, wherein the first term is incorrect. (3) अथवा षोडशपूर्णानि, a variant in D. (4) वक्ष्यामि सुरसुन्दरि, a variant in D. (5) D reads पावके नैव. (6) This hemistich is not found in D. (7) B reads सुरेश्वरि. (8) B has हीनाङ्गाधिकाङ्गश्च, D has हीनाङ्गाविहीनाङ्गश्च. K has हीनाङ्गाप्यधिकाङ्गश्च. (9) B reads कुष्ठमागतः. D reads सर्वे व्याधिपराजिताः. K reads कुमागतः, which is incomplete. (10) B reads नताङ्घ्रिः. (11) जराजर्जरिताङ्गश्च, a variant in D. (12) जरयतो जितेन्द्रियः, a variant in B. कामयन्तो जितेन्द्रिया, a variant in D. जरायसाजितेन्द्रियः, a variant in K. (13) जगदमूकोपि, an incorrect variant in B. अजानपाणिहीनोपि, a variant in D, which has no sense. जड़गदमूकापि, an incorrect variant in K. (14) D reads मूको वाक्विहीनकः. K reads पंगहीनस्तथैव च, which is a repitition.

मङ्गलत्वचविनिर्म्मुक्तो[1] जीवितैरेव तिष्ठति[2] ॥ २१० ॥
यदस्यास्य प्रभावेन समावर्त्तो यदा भवेत्[3] ।
कोटिवेधि रसं ग्राह्यं पिण्डषट्केन संयुतम्[4] ॥ २११ ॥
एकैकस्य तु मध्यस्थां गुटिकां कारयेद्बुधः ॥ २१२ ॥
गुटिकाः पञ्चसंख्याताः षष्ठी चैव तु पञ्चमी[5] ।
षट्संगुणितपिण्डं स्यात्[6] ताम्रपात्रं सुशोभनम् ।
अर्द्धं[7] पुरुषमात्रं तु पुरुषार्द्धं च[8] मण्डलम् ।
चतुर्मुखकृतं[9] काष्ठं तस्योपरि निवेदयेत् ॥ २१३ ॥
सघृतं च मधूतैलं समभागेन लेपयेत्[10] ।
पूजयित्वा कटाहं तु दिक्पालांश्चैव पूजयेत् ॥ २१४ ॥
कुमारीं पूजयेत् पश्चाद्दद्याद्दिक्षु बलिं[11] तथा ।
धमनं तत्र कुर्व्वीत चतुर्द्दिक्षु शनैः शनैः ॥ २१५ ॥
सुतप्तं च विधातव्यं[12] निर्धूमं च यदा भवेत्[13] ।

---

(1) D has सुखत्वं च विनिर्मुक्तो, which is senseless. K has पंकत्वं च विनिर्मुक्तो, which is also absurd. (2) जीवैश्च शरदां शतं, a variant in D, which is quite opposite in meaning. जीवशेषेऽवतिष्ठते, a variant in D. (3) D reads सुखमध्ये प्रदापयेत्. (4) पिंडषट्कोपसंस्थितः, a variant in D and K. (5) B reads षष्ठं चैव च पञ्चमम्. D reads षष्टांशं पञ्चमं. K reads षष्टो चैव तु पंचमं. (6) B reads पिण्डस्था. D reads पिंडे स्यात्. (7) B reads चर्द्धं. (8) B has पुरुषार्द्धेन. (9) B reads चतुर्मुखी कृतं. (10) D reads मिलयेत्. (11) D reads दद्यादशं. K reads बलीं. (12) घृतं तत्र विधानं तु, a variant in D. सूतं तत्र विधानं तु, a variant in K. (13) रक्तवर्णं भवेद्यदा, a variant in D. K reads यथा भवेत्.

तदा नत्वा गुरुं देवं[1] चन्द्रार्कादि[2]ग्रहानपि ।
नक्षत्राणि च संपूज्य[3] आत्मानं तत्र निक्षिपेत्[4] ॥ २१६ ॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च[5] ।
सुदुर्लभं विजानीयात्[6] सिद्धिरूपं नियोजयेत् ॥ २१७ ॥
कललं च भवेत् सर्व्वं पुरश्चापो विनिक्षिपेत्[7] ।
रक्तवर्णं विजानीयात्तेजस्तेजसि योजयेत्[8] ॥ २१८ ॥
मांसपिण्डं भवेत्तत्र वायुं[9] तत्रैव निक्षिपेत् ।
कान्तवर्णं[10] तदा कार्य्यं निक्षिपेत् खं कपालके[11] ॥२१९॥
धमन्तं[12] हेमसंकाशं चारलं तन्तु[13] पादयेत्[14] ॥ २२० ॥
ज्ञात्वा तत्र महारावं[15] हुङ्कारं सुरपूजितम्[16] ।
उत्तिष्ठति[17] न सन्देहः पुष्टाङ्गो भास्करो यथा ।

---

(1) D has नत्वा गुरुं गणपतिं. K has पश्चात्. (2) K reads दर्यादि, which is incomplete. (3) B reads ग्रहिं पूज्यं. D reads योगिनीभ्यो. K reads ग्रहिपूजा. (4) वर्लिं तत्र विनिक्षिपेत्, a variant in B. (5) D reads वायुाकाशमेव च, which is incomplete. (6) D reads मदुर्दितं. B reads सुदुर्लभं विजयेत. Both seem to be incorrect. (7) D reads पुरयोनिष, which is incorrect. (8) B reads तेजे तेजं नियोजयेत्, which is incorrect. (9) D reads यत. (10) D reads श्वेतवर्णं. K reads तत्तद्वर्णं. (11) B reads तत्र कपोलमि. D reads ब्रह्मनिज्ञको. K reads ब्रह्मपालिको. (12) B reads धमंतं. D reads धमन्ते. K reads धमते. (13) B has चातलं तत्र. K reads तत्र. (14) B and D read दापयेत्. (15) D reads महाहारं. (16) B reads बकारं. D reads बह्माकारं सुपूजितम्. (17) B reads उत्तिष्ठते, which is not correct. K reads उत्तिष्ठेति, which is also incorrect.

दिव्यतेजा महाकायो दिव्यदृष्टिर्महाबलः[1] ॥ २२१ ॥
शतयोजनविस्तीर्ण-घण्टारावं सुपूजितम्[2] ।
दीप्तहेममयं दिव्यं रत्नमाणिक्यशोभितम् ॥ २२२ ॥
पुष्पमालापताकाढ्यं[3] किङ्किणीजालमण्डितम् ।
विमानोत्तममारूढ़ं शङ्खकाहलनिःस्वनैः ॥ २२३ ॥
अप्सरोगीतवादित्रैर्नृत्यैरपि मनोहरैः ।
दिव्याभरणसंपूर्णा दिव्यमाल्योपशोभिता[4] ॥ २२४ ॥
अपाङ्ग[5]रागसम्पन्ना सुरूपा मदविह्वला[6] ।
आगच्छति न सन्देहो देवकन्योदितं प्रति[7] ॥ २२५ ॥
गृहीत्वा साधकेन्द्रं च सिद्धलोके वसेत्ततः[8] ॥ २२६ ॥
दिव्यानि स्नानपानानि[9] दिव्यान्याभरणानि सः ।
रमते शतसाहस्रं[10] सिद्धकन्याः स्मरातुराः[11] ॥ २२७ ॥

---

(1) After this śloka we find in D a portion of a work called वीरामित्र, which, being quite unconnected with the present subject, we have rejected. (2) K reads अटा च शिवपूजितं, which has no clear sense. (3) K has पुष्पमालायुतं कार्यं, wherein the last term is incorrect. (4) दिव्यमाल्यैः सुशोभिता, a variant in K. (5) B, D and K read उपांग. (6) B reads दिव्यकामिनी. (7) B reads भादेशं दीयतामिति. D reads देवकन्योदितं प्रति. (8) B reads सिद्ध—अति ताः. D reads सिद्धलोका वसन्ति च. These two readings are partly incorrect. K reads शिवलोकं वसेत्ततः. (9) K reads यानि पानानि. (10) B has रमत only. K has रमंते. (11) D and K read स्मरातुराम्, which is incorrect, as there is सिद्धकन्याः in plural number.

तस्मिन्नेकार्णवे घोरे नष्टस्थावरजङ्गमे ।
देवा यत्र[1] विलीयन्ते सिद्धस्तत्रैव लीयते ॥ २२८ ॥[2]
भूतकालान्तको नाम षण्ढोऽयमुपवर्णितः[3] ॥ २२९ ॥
तत्त्वतोऽयं[4] महादेवि यदा कर्तुं न शक्यते ।
अनेनैव शरीरेण तदा[5] सिद्धिर्भविष्यति ॥ २३० ॥

इति श्रीपार्वतीपरमेश्वरसंवादे[6]
रसार्णवे रससंहितायां
देहवेधो नाम[7]
अष्टादशः पटलः ।

॥ समाप्तश्चायं ग्रन्थः[8] ॥

---

(1) B reads भुवनानि. (2) This śloka is a repitition of the previous śloka No. 170. (3) षण्ढोऽयमुपवर्जितः, an incorrect variant in D. (4) कं'भवायं, a reading in D. तथायं, a reading in D. तत्त्वायं, a reading in K. (5) D and K read यथा. (6) B and D want this portion. (7) D reads हेमविधो नाम, which is incorrect. (8) B has ॥ इति गौरससंहितायां रसार्णवं संपूर्णम् ॥

# एतद्ग्रन्थसङ्कलनम् ।



काश्मीराद्दक्षिणावर्त्तात् विकानीराच्च देशतः ।
मान्द्राजाच्चैव नगरात् बहुवित्तोपघाततः ॥
प्रफुल्लचन्द्ररायेण रसायनविपश्चिता ।
श्रीमता धीमताहृत्य तन्त्राणि बहुयत्नतः ॥
तेषान्तु बहुदोषाणामशुद्धानाञ्च वर्णतः ।
पाठापाठविवेकाय विशुद्धीकरणाय च ॥
नियुक्तः श्रीहरिश्चन्द्रः कविरत्नाभिधो द्विजः ।
रसार्णवमिमं ग्रन्थं कलयामास यत्नतः ॥
कलिकातापुरे चन्द्रनेत्रवस्विन्दुसम्मिते ।
शाके ग्रन्थः समाप्तोऽयं तपोमासीन्दुजे दिने ॥



## ABBREVIATIONS USED IN THIS WORK.

B = Bikánir MS.

D = Deccan MS.

K = Kásmir MS.

M = Madras MS.

My = Mysore MS.

d. r. = different reading

gram. = grammatically

inc. = incorrect

र. चि. = रसचिन्तामणि

र. र. स. or रस. स. = रसरत्नसमुच्चय

स. द. स. = सर्व्वदर्शनसंग्रह ।

*The following table of errata and variants is mainly based upon the authority of a big MS. called* रसकामधेनु, compiled by CHUDAMANI MISRA of Sákadwípa,—the MS. having been at hand of the editors about the close of printing of the text.

## THE TABLE OF ERRATA AND VARIANTS.

| Page | Line | For | Read |
|---|---|---|---|
| १४ | ७ | सदृशो योनो | सदृशः पोनो |
| ४५ | ४ | लोहस्य | लोणस्य |
| ५७ | ८ | फणिविजिह्वा गोजिह्वा | गोजिह्वा फणिजिह्वा च |
| ६० | ३ | तोरवल्ली | तोयवल्ली |
| ,, | ७ | कङ्गुनी | कञ्चुकी |
| ,, | ,, | च पिपीलिजम् | चापि पीलुकम् |
| ७४ | ८ | सर्जक्षारो | सर्जिक्षारो |
| ८३ | (12) note | is incorrect. | we have adopted. |
| ८८ | ४, ६ | गुणपञ्चसमं | गुणत्रयसमं |
| ८७ | २, ५ | मोदितम् | मर्द्दितम् |
| ,, | ८ | चिप्रा | पिष्टा |
| ,, | १२ | सूरणकन्दसम्पुटे | सूरणसंपुटेन |
| ८८ | १० | शिलावङ्गातुकं भातं | शिलावज्रमुखाक्तं |

| Page | Line | For | Read |
|---|---|---|---|
| १०१ | ५ | सारयेत् | मारयेत् |
| १०४ | ७ | कोकिलाचयम् | कोकिलचयम् |
| १०६ | ५ | लघुकान्दरदो | लघुकान्दरसो |
| ,, | ८ | लोह | मेह |
| ११७ | १ | च पडालकम् | चपलालयम् |
| ,, | ५ | गोरसोनं | गोरसना |
| ११८ | ७ | हयगन्धाश्रितालकैः | हयगोधोद्धृतालकैः |
| १२२ | ५ | कटुपञ्चकम् | पटुपञ्चकम् |
| ,, | ८ | षड्विन्दुर्द्विमुखी तथा | षड्विधा द्विमुखास्तथा |
| १२६ | ११ | श्वेतपीतारुणः सिते | श्वेतपीतारुणासिते |
| १३० | ७ | स्वर्णं | चूर्णं |
| १३१ | १० | च नरीकेश | चामरीकेशं |
| १३२ | १० | लाक्षारसनिभं | लाक्षाभं निर्मलं |
| १३४ | ८ | चयेत् | क्षिपेत् |
| ,, | ११ | गते | गर्भे |
| ,, | १२ | तदेतद्विष्टिकास्तम्भे | एतदेकांशिकस्तम्भो |
| १३५ | ८ | वापितं शस्त्रत् | चापि शतशः |
| ,, | ११ | शिलासूत | शिलासत्त्व |
| १३६ | २ | शतसहुणे | शतशो गणे |
| १३७ | १ | शिलावाहं | शिलावापं |

| Page | Line | For | Read |
|---|---|---|---|
| १३७ | २ | योषाचृष्टस्य | योषज्ञष्णस्य |
| ,, | ५. | खादति | वापितं |
| ,, | ,, | विना | विषम् |
| १३८ | ७ | काक | शाक |
| ,, | ८ | कोरण्डकस्य | कौरण्डकेन |
| ,, | १० | च त्रिगुणया | त्रिगुणेनैव |
| ,, | ११ | वापयित्वा | प्रावयित्वा |
| १३९ | १ | द्रवं | दृढं |
| १४२ | ११ | माचिकम् | मोचकम् |
| १४८ | ४ | षकम्पस्य | सकम्पस्य |
| १४९ | ४ | वसुभण्टादिभि | वसुहट्टादिभि |
| १५३ | ५ | मूलत्वात् | मूलस्थं |
| ,, | ९ | मत्प्रभावं | भ्रामभावं |
| १५५ | ४ | लब्धापायो | लब्धप्रायो |
| १६२ | ६ | वल्लीपुपुङ्काया | सितेपुपुङ्काया |
| १६३ | ३ | नागमुण्डी | नागशुण्डी |
| ,, | ११ | करकाभ्रकम् | भास्कराभ्रकम् |
| १६५ | १२ | चारयेत् | जारयेत् |
| ,, | १३ | काङ्क्ष | पङ्क्ष |
| १६६ | ३ | जायते | जार्यते |

| Page | Line | For | Read |
| --- | --- | --- | --- |
| १६६ | ५ | सान्धेन | कोष्ठेन |
| ,, | ११ | वासवाम्ब | वेतसाम्ब |
| ,, | १२ | दुग्धोर्षा | दग्धोर्षा |
| १६८ | ३ | मतिमाजन: | गतिमाजन: |
| १७० | २ | स्वगुभद्दय | वस्तुद्दय |
| १७१ | १ | तथा रत्नं | रत्नमभ्रं |
| १७२ | ६ | महाजारसमायुक्तं | महाजारणमित्युक्तं |
| ,, | ८ | पद्मरागप्रलेपेन | पद्मरागं प्रयत्नेन |
| १७३ | १० | पादितं | पाचितं |
| १७४ | ११ | विड़ाग्निना | दृढ़ाग्निना |
| १७५ | १ | चार्द्रपिण्डे नपुंसकम् । | चार्द्रपिण्डेन संयुत: । |
| ,, | २ | प्राहयेद् | तृतीये |
| ,, | ३ | दोलायन्त्रविपचण: | दोलायन्त्रे विचक्षण: |
| ,, | ६ | यावदार्द्रक | प्राग्वदार्द्रक |
| १७६ | ४ | महाजारसमन्वितान् | महाजारणसंयुतान् |
| १८२ | १ | च पडालकम् | चपलालयम् |
| १८४ | ७ | सिवयक्षौ | सिंहयक्षौ |
| १८७ | ५ | किंवारनाल | चिञ्चारनाल |
| १८९ | १ | वह्निमिला | वह्निमिश्रा |
| १९० | ८ | यदा लवणमिदि च | लभ्यते सैन्धवं यथा |

| Page | Line | For | Read |
|---|---|---|---|
| १८४ | ८ | प्रयोगो | प्रयागो |
| „ | ६ | तस्यासने | तस्य मध्ये |
| २१० | २ | नैव वाहस्तु | न च वा भस्म |
| २२१ | ३ | यथा यास्त्रं | तथा गुह्यं |
| २२४ | १ | तापयेद्भूगतं | तापयेद्भूमित: |
| २४१ | १ | तारताम्राणि | तारपत्राणि |
| २७६ | ४ | प्राकार | प्रकाश |
| २७७ | ६ | नृप | त्रय |
| २९५ | ६ | द्रुव | द्रव्य |
| ३१० | ५ | भूषा | मूषा |
| ३११ | ३ | रसयैव | रसायासां |
| „ | ४ | अन्धकर्यामलस्तथा | अध: कुर्य्याद्यामलम् |
| „ | ८ | जले | मले |
| ३१७ | ५ | वसुभद्द | वसुद्रह |
| ३३९ | ११ | पुष्प-रस | पुष्पेरथ |
| ३४० | ५ | दीमारी | वाराही |
| ३४२ | ६ | कोकिला कारवोरं च | कोकिलाचकवीजच |
| ३४४ | ३ | पिष्टि | वृष्टि |
| ३५२ | ५ | वज्रवम्बो | महारसोपरसलोहवम्बो |
| ३६१ | १२ | वङ्गतीक्ष्णं कपाली | वङ्गतीक्ष्णकपाली |

| Page | Line | For | Read |
| --- | --- | --- | --- |
| १६२ | १ | वैक्रान्तं नागकापाली | वैक्रान्तनागकापाली |
| „ | ११ | रविमार्गं कपाली | रविनागकपाली |
| १७० | ७ | पुटवेधकम् | याममात्रकम् |
| „ | १२ | हेमधर्म्मांच | हेमघर्म्मांच |
| १७१ | ५ | चित्रधर्म्मा | वीतघर्मा |
| „ | ७ | धर्म्मंयुता | घर्मंयुता |
| „ | १२ | कारयेद्दलधर्म्मांच | कारयेत्तद्दलं घर्मे |
| ३८८ | १ | शिग्रुपत्राङ्गुली | शिग्रुः पत्राङ्गुली |
| ३९१ | ४ | चीरे पार्कस्य | चीरेणार्कस्य |
| ३९२ | ४ | पाचयेदनुजाम्भेन | पाचयेद्दनुजाम्भेन |
| „ | १५ | [अनुज may mean मध्यम.] | |
| ४०९ | ८ | वर्णेसु | वर्गेसु |
| ४१९ | १२ | कारविल्वच | चिरविल्वच |

---

N. B. The reader is requested to consult the Table of Errata and variants before referring to this Index.

## अ

१८७, ( Red ) ३२४, (Yellow) ३२५, ३८६, ४०६ &c.
अरक्तोत्पल ( Red lotus ) ७०
अर्क (Calotropis gigantea, Beng. ákanda ) ७४, १२१, १२२ &c.
अर्कक्षार (Alkali of ákanda) ७४
अर्कक्षीर (Milky juice of ákanda) ६७, ११६, ११८ &c.
अर्कदुग्ध (See अर्कक्षीर) ८७, १७० ३५७
अर्कपत्री (अर्कपत्रिका) (=ईश्वरमूल, Beng. isher múl) ६१
अर्कपयः (See अर्कक्षीर) ३४८
अर्जुन ( Terminalia arjuna, Bedd., Beng. arjun) १३८
अर्जुनक्षार (The text अर्जुन means here अर्जुनक्षार or Alkali of arjuna ) ७४
अर्जुनी (=ज्वालामुखी=रक्तचित्रक —रसकामधेनु) ६३, ३८४
अलक ( =देवदाली—रसकामधेनु ; see देवदाली ) ११८
अलक ( d. r. आलक, हरिताल ; see ताल ) ४२४
अलम्बुषा ( A sort of लज्जालुका, a sensitive plant ) १६०, ४१८
अलर्क ( Calotropis gigantea alba or procera, Beng. sveta (white) ákanda) १८५
अश्मदलनी ( =अश्मभेदक, Beng. pátharchúr) १३१
अश्वगन्धा ( Withania somnifera, Dunal, Beng. asvagandhá) १२२, ३८८
अश्वत्थ ( Ficus religiosa, Linn., Beng. asvattha) ८६
अश्वमार ( =श्वेत करवीर, Beng. white karabí ) ३५०
अष्टमूलिका ( Eight plants used for the purification of mercury) ६३
असन ( Terminalia tomentosa, W. and A., Beng. piásál ) ६६
अस्थिशृङ्खल (=अस्थिसंहार. Vitis quadrangularis, Wall., Beng. hádjodá ) ८९
अहि ( See नाग ) १८८, २७३
अहिमर ( See अहिमार ) २६८
अहिमार (=विट्खदिर. Acacia

once killed, mercury ) १५०, १६३, १६५, ३५४, ३८१, ४०१&c.

आर्द्रक (Zingiber officinale, Rosc., Beng. ádá ) ६४, १४४ &c.

आवर्त्तक ( =रौप्यमाक्षिक, see माक्षिक ) ६८

आवाप ("द्रुते द्रव्यान्तरक्षेपो लौहाद्ये क्रियते हि यः, स आवापः" रस. स. Throwing other things to the molten metals, see वाप and परिवाप) ११६, १२१

आशुगपुङ्ख ( See शरपुङ्ख ) १८५

आसुरी ( See आसुरीलवण ) १७०, १८७

आसुरीलवण (=विड़लवण, Kálá nimak, Beng. bitlavana ) १५२

आस्फोट ( See अर्क ; it means also ákhrot = Juglans regia) १६०

इ

इङ्गुद ( See इङ्गुदी ) ३८७

इङ्गुदी ( Balanites Roxburghii, Planchon., Beng. ingot ) ११८, ३८८

इङ्गुदीफल ( Fruit of इङ्गुदी ) २५८, २६०, २७०

इन्दुरी (=इन्दुरा, सोमराजी, see वाकुची. Vernonia anthelmintica, Willd., Beng. soma-ráj ) ६२

इन्दुरेखा (=सोमराजी, see वाकुची) ८६

इन्द्रगोप ( Coccinella of various kinds ) १३४, १७८, ३७४ &c.

इन्द्रगोपक (See इन्द्रगोप) १०४, ३५६

इन्द्रवारुणी ( Citrullus colocynthis, Schrad., Beng. indrayava ) ६०, ८८, २६१, ३४१, ३५० &c.

इष्टका, इष्टिका (A brick or brick-dust ) १८७,—१५३, १६६, &c.

ई

ईश्वरी ( A sort of creeper called वन्ध्याकर्कोटकी, "भूरिक्षीरपरिस्रावा"—रसकामधेनु) ६१, ३५५

## उ

usitatissimum, Linn., Flax, Beng. Masiná) ७१

उरग (See नाग) १०२, १७३ &c.

उरगा (=नागी=वन्ध्याकर्कोटकी, Beng. Titkánkdi; d r तुरगी=अश्वगन्धा) १५२

उलूखल (A wooden mortar, Beng. udukhal) ४२

उषण (=शुण्ठी. Dry ginger, Beng. sunth) १५५

उष्णोद (A hot mineral water) २५०

उष्णोदक (See उष्णोद) २४७, २५०

## ऊ

ऊर्णा (Wool, felt &c. the hair of sheep, deer, camels &c.) १०३, ११४, १३२, १५३ &c.

ऊर्ध्वपातन (A sort of apparatus resembling Pátana-yantra, see Ray's Hindu Chemistry, Vol. I, p. 122) १५४

ऊषण (=मरिच. Black pepper) १५५

## ए

एकपर्णिका (=एकपत्रिका, Beng. gandhasati) ५८

एकवीरा (=वन्ध्याकर्कोटी) ५६

एकवीराकन्दरस (Watery juice of the root-stock of एकवीरा) २१४

एरण्ड (Ricinus communis, Linn., Beng. bherándá) १४२, १६१

एरण्डतैल (Oil of bherándá, castor oil) ६६, ६८, १०६

एरण्डवृक्ष (Plant called एरण्ड, see एरण्ड) ८८

## ओ

ओषधि (An annual plant or deciduous herb) ४२

ओषधी (See ओषधि) ५६, १६४

## औ

औमरण्ड (Stem of masiná tree or flax-stem) ७१

## क

कटुकोघातकी ( A sort of bitter ghoshálatá, see कोघातकी ) ३३३

कटुतुम्ब ( See कटुतुम्बी ) १७२, १७६

कटुतुम्बी ( A wild variety of Lagenaria vulgaris, Sering, Beng. titláu) ६०, १३६, २२६

कटुतैल (Mustard oil) १३१, ३६२

कटुत्रय ( =त्रिकटुक. The aggregate of three spices—ginger, long pepper and black pepper, Beng. shunth, pipul and marich) ११४, १४३ २५८

कणा (=पिप्पली. Piper longum, Linn., Beng. pipul ) ४०१

कण्टकारीरस (Juice of कण्टकारी =Solanum xanthocarpum, Schrad.) ३०६

कण्डूलसूरण ( Itchy सूरण= Amorphophallus campanulatus, Blume., Beng. buno ol) ८७

कतक ( Strychnos potatorum, Linn., Beng. nirmali ) १७२

कदम्बक (=माक्षिक. See माक्षिक) २६६

कदली ( Musa sapientun, Linn., Beng. kalá) ६२, ६४, १२१, १४२, १६०, ४१६ &c.

कदलीकन्द ( Root-stock of the plantain tree, Beng. kalar ete) ६७, १३०, ३०६ &c.

कदलीकन्दक (Root-stock of plantain tree ) ७४

कदलीकन्दतोय ( See कदलीकन्द-निर्य्यास) १३०

कदलीकन्दनिर्य्यास (Watery juice of the root-stock of the plantain tree) १६१

कदलीकन्दसार ( See कदलीकन्द-निर्य्यास ) ६७, ११३

कदलीरस (Juice of the plantain) ६६, ६७, ६६

कनक ( Gold ) १२४, १३०, १७०, १७२, २४५, २६१, २६४, ४१३ &c.

कनक ( A sort of dhuturá called kanak dhuturá ) ३३२, ३४१, ३५० ३६४ &c.

phantum, Corr., Beng. kathbel ) २७१

करञ्जाख्य ( See करञ्ज ) १३६

करवीर ( Nerium odorum, Soland., Beng. karabí ; also a sort of creaper "हयमार-समाकारा लता पुष्पसमन्विता, करवीरलतेत्युक्ता"—रसकामधेनु) ६५, ७०, ८७

करवीरक ( See करवीर ) ३८२

करिन् ( See नाग ) ३७६

करिषाग्नि ( A fire of dry cow-dung ) ३४३

करीषाग्नि (See करिषाग्नि) ४४, ४३१

कर्कट (=कर्कटक. A sort of कन्द-विष ) १३२

कर्कटास्थि ( Crab-shell ) ८६, ८७, ३१०

कर्कटी ( A sort of cucumber, Cucumis Melo, Linn., Beng. kánkud) ४१८

कर्कोट ( See कर्कोटी ) ४१६

कर्कोटी ( =कर्कोटिका, Beng. kánkrol) ६०, १५५

कर्कोटीकन्द ( Bulbous under-ground stem of कर्कोटी) २१५

कर्णाख्य ( =श्वेतझिण्टी. White Barleria cristata ) १३२

कर्त्तरी (A sort of महौषधि) २३४, (origin of) २३५, (varieties of) २३५—२३६

कर्द्दम (=पङ्क, "मद्रवा मर्द्दिता सैव (कज्जली) पङ्क इत्यभिधीयते"—रसकामधेनु) २७२

कर्पूर ( Camphor ) ६, ८४, १७०, ३३२, ४१७

कर्षक ( A sort of kánta or kántapásháṇa, see कान्त-पाषाण) ७६, ३६६

कर्षाग्नि (See करिषाग्नि) ४४, ३४६

कर्ष्वनल (See करिषाग्नि) १८६

कलल (The uterus, the embryo ; here it means मांसपिण्ड) ४३४

कल्क (A paste,prepared by grinding dry or fresh vegetable substances on a stone with a muller, and then making a thin paste, with the addition of water when neces-sary ( "यः पिण्डश्चार्द्रद्रव्याणां

काचकिट्ट (=काचमल. Excretion of mica mixed with saline earth, Beng. malamáti) ६६

काचकूपी (Glass-bottle) १८४

काञ्चन ( Gold) (See सुवर्ण) ११५

काञ्चन ( Bauhinia acuminata, Linn., Beng. kánchan) १४२

काञ्चनार ( Bauhinia variegata, Linn., Beng. rakta kánchan) ३०८, ४२०

काञ्चनी ( Turmeric. Curcuma longa, Roxb., Beng. halud) ५६

काञ्जिक ( A sour gruel prepared from the acetous fermentation of powdered paddy and other substances, see धान्याम्ल) ४२, १२१, १५३ &c.

काञ्जिकान्न ( Boiled rice steeped in काञ्जिक, see काञ्जिक) ४१६

काञ्जी (See काञ्जिक) १६५

कान्त, कान्तक (See कान्तपाषाण) (Varieties of) ७६,८६,४०३,४२७

कान्तचूर्ण ( Powdered कान्त, see कान्त ) ४१३

कान्तचूर्णत्रुटि ( A smallest portion of कान्तचूर्ण, see कान्तचूर्ण ) ४२८

कान्तलौह ( A sort of cast iron called कान्तलोह ) २६२

कान्तनाग (The best कान्त—सर्व्वतोमुख कान्त, see p. ७७) ७६

कान्तपाषाण ( A sort of stone called कान्त—as loadstone ) ६८, ८३, ३१०, ३५१ &c.

कान्तबन्ध ( Binding of कान्त or loadstone ) ३२५

कान्तमुख (The best कान्त—सर्व्वतोमुखकान्त, see p. ७७) १३५

कान्तलोह ( Cast iron, Beng. kántilohá, d.r. कान्तिलोह, काललोह इति रसकामधेनु ) ११७, १८२, ४०३

कान्ता ( A plant called priyangu or krishnakali ; d.r. क्रान्ता ) १५२

कान्ताकान्त ( d. r. कान्तिकान्त, कान्तिलोह, see कान्तलोह) २६८

कान्तसत्त्व (Essence of कान्तपाषाण) १६६, ४१४

